[1]ततः श्रेष्ठिना [2]पृष्टम्—कोऽयं देवः? किं नामा? [3]कस्मादस्मदुपरि वात्सल्यम्?। देवः प्राह—अहं त्वत्पुत्रो यो मृतः, त्वदुक्तनमस्कारमहामन्त्रश्रवणेनाऽहं धरणेन्द्रपरिवारमध्ये देवो जातोऽत्र तिष्ठामि। मातुः, [4]पितुः, भ्रातुः स्नेहेन राज्यप्राप्तिं यावत् सांनिध्यं करिष्यामि। एष [5]मद्भ्राता भाग्याधिकोऽस्ति, तेन युवाभ्यां काऽपि चिन्ता न कार्या। परम्—[6]अस्य बालस्य मन्नाम्ना नाम देयम्, यथा चिरंजीवी स्यात्। पित्रोक्तम्—तव किं नाम? देव आह—प्रियंकर इति। ततः पुत्रस्य तदेव नाम दत्तम्। पित्रोक्तम्—एष बालको देवनाम्नाऽमरो भूयात्[7]। पुनर्देवेनोक्तम्—विषमकार्ये, संकटे वा पतिते [8]अत्राऽऽगम्य मत्स्थाने वृक्षाग्रे भोगः कार्यः, यथा युष्माकमहमाशां पूरयामि। यतः—

"भोगेन देवास्तुष्यन्ति भोगेन व्यन्तराः सुराः। भोगेन भूत-प्रेताश्च भोगो विघ्नविनाशकः" ॥५६॥

[9]ततः श्रेष्ठी [10]शुभमुहूर्ते नगरे प्रवेशं करोति। तदा दक्षिणः खरोऽभूत्। खराष्टकं [11]चानेन कृतम्। श्रेष्ठी हृष्टः। यतः—

"निर्गमे वामनः श्रेष्ठः प्रवेशे दक्षिणः शुभः। पृष्ठतश्च न गन्तव्यं [12]सन्मुखः पथभञ्जकः" ॥५७॥

---

१ क तथापि। २ क प्रोक्तम्। ३ क तेनोक्तम्। इति अधिकम्। ४ क नास्त्येतत्। ५ क मम भ्राता। ६ क नास्त्येतत्। ७ क 'भूया.' इति नोचितम्। ८ क आगन्य। ९ क 'श्रेष्ठी तत' इति व्यत्यय.। १० क. विजयमुहूर्ते। ११ क 'तेनोक्तम्' इति अप्रस्तुतम्। १२ क सन्मुखस्यार्थे–।

"[1]प्रथमे हानिदः शब्दो द्वितीये सिद्धिदायकः। तृतीये च न गन्तव्यं चतुर्थे स्त्रीसमागमः" ॥५८॥

"[2]पञ्चमे च भयं विन्द्यात् षष्ठे तु क्लेशमेव च। सप्तमे सफलं कार्यमष्टमे लाभमा[3]दिशेत्" ॥५९॥

श्रेष्ठी सुशकुनैः स्वगृहे[4] प्राप्तः सुखेन धर्मकर्माणि करोति। प्रियंकरः पुत्रो [5]पितुर्मनोरथैः सह वर्धते। अस्मिन्नवसरे प्रियश्रीनाम्न्याः [6]पितृगृहे निजभ्रातृविवाहमहोत्सवो जायमानोऽस्ति, तदाऽऽकरणाय भ्राता समागतः। सा सहर्षं स्वमातृधाम्नि भ्रात्रा सह गता। यतः—

"वल्लभौ मातृ-पितरौ वल्लभौ पति-पुत्रकौ। सहोदरश्च पञ्चैते स्त्रीणां हर्षस्य कारणम्" ॥६०॥

तावता अन्या अपि भगिन्यः स्वगृहात् समागताः। (ताश्च) [7]सवाहनाः, सपरिकराः, सानुचराः, दास-दासीजनपरिवृताः, स्वपुत्रयुताः, परिहित-दुकूलाः, मुखसुरङ्गताम्बूलाः, [8]सुवर्णघटित-हीरकजटित-राख(ष)डी-तिलकाः, कस्तूरी[9]पत्रवल्लिराजितकपोलफलकाः[10], [11]जवाधिमहमहायमानमस्तकाऽलकाः, [12]देशविख्यातमहेभ्यपतिकाः, गजगतिकाः, [13]शोभायमानकर्णस्वर्णकुण्डलाः, मुक्ताफल-दीनारमालादिविभूषितकण्ठकन्दलाः, सुवर्णरत्नमुद्रिका-

१ क प्रथम हानिद शब्द द्वितीय सिद्धिदायकम्। २ क पञ्चमेन। ३ क. मेव हि। ४ क पुत्रसहित। ५ क दिने दिने। ६ क पितुर्गृहे। ७ क समानासन-वाहन। ८ क. स्वर्ण। ९ क परिमल। १० क. फलिका। ११ लोकरूढिगम्यमेतत्। १२ क -विदेश-। १३ क. नास्ति एतत्।

कङ्कणाः, सर्वकार्यचातुर्यप्रविणाः,[1] लहलहायमानत्रिसर–चतुःसरहार–[2]स्वर्णसर्वांगाभरणसुन्दराः [3]सन्ति। पासदत्तस्य पत्नी पुनः सामान्यवस्त्रा, जीर्णकञ्चुका, जीर्णकौसुम्भोत्तरीया, त्रपुमयकर्णकुण्डला, ताम्बूलरहितमुखकमला, मलीमससमस्तकुन्तला, कङ्कण–मुद्रिका–[4]कांकणी–[5]मुक्तहस्तयुगला, [6]दारिद्र्यकर्मकरणकर्कशकरा, [7]निर्धना, वराका गृहकोणके स्थिता लज्जायमाना, [8]अमाप्तस्वजनमाना हृदये चिन्तयामास–[9]जगतः मध्ये [10]कः कस्याऽपि वल्लभो नास्ति। यतः—

"वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, [11]निर्गन्धं कुसुमं त्यजन्ति मधुपा दग्धं वनान्तं [12]मृगाः।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं [12]सेवकाः, सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः"॥६१॥

तस्याः गौरवं कोऽपि न करोति। यतः—

"[13]गौरव कीजे अलवडी नवि को कीयां न राम। गरथविहूणा माणसा[14] गाधहबूचा नाम (?)" ॥६२॥

[15]पत्नीभिः, भगिनीभि(श्च) सा हसिता। विवाहमिलितलोका अपि कथयन्ति—भगिनीत्वे[16] समानेऽपि

१ क प्रवणा। २ क. स्वर्णनिगोदरा। ३ क देवाङ्गनासोदरा। ४ क झझरक (भाषायाम्–झाझर) ५ क पाद–। ६ क दरिद्र–। ७ क. स्वजनाऽकृतादरा। ८ क नोपमाना। ९ क जगन्मध्ये। १० क कोऽपि। ११ क. पुष्प पर्युषित। १२ क. अनयो पादान्तयोर्व्यत्यय'। १३ क गुरव। १४ क–सह। १५ क. विवहारिपत्नीभि। १६ क भगिनित्वे।

पुण्य-पापयोरन्तरं कियदस्ति—एषा रन्धनाद्येव कुर्वाणाऽस्ति, अपरा राज्ञीवद् आदेशं ददानाः सन्ति। [1]ये जीवाः दान-देवपूजा-तपः-संयमादिधर्मकृत्यानि न कुर्वन्ति ते जीवा अवश्यं प्रेष्यत्वं प्राप्नुवन्ति। [2]भगिनीकृतहास्यं दृष्ट्वा पासदत्तपत्नी मनसि [3]दूना, पराभवपदं प्राप्ता चिन्तयति—[4]कुलम्, गुणांश्च लोका न विलोकयन्ति, किन्तु धनमेव। यतः—

"[5]जाई विज्जा रूव तिन्नि वि निवडंतु [6]कन्दराविवरे। अत्थो च्चिअ परिवड्ढउ जेण गुणा पायडा हुंति" ॥६३॥

अहमभाग्या, [7]पुण्यरहिता, विवाहे भगिनीभिः [8]पराभूता, ततः प्राग्भवकृतखण्डतपसः फलम्। यतः—

"अद्धा खं(पं)डा तप कीआ(या) छतें न दीधां(धुं) दांन। ते किम पामे जीवडा परभवि धन बहुमांन" ॥६४॥

ततो विवाहे [9]जातेऽपर[10]भगिन्यो [11]भ्रातृदत्तदुकूल-महर्घ्याभरणाः सगौरवं कृतश्व(स्व)सुरवासवस्त्रार्पणेन[12] संतोषितसार्थाऽऽगतदासाः, स्वगृहे प्रहिताः। [13]प्रियश्री[14]र्निर्द्धना भगिनी [15]बान्धवार्पितरङ्गहीनमानहीनस्थूल-

---

१ क. "यत -न करंति जे तव-संजम च ते तुल्लपाणि-पायाण। पुरिसा समपुरिसाण अवस्स पेसत्तणमुवेइ।" अस्यार्थस्तु उपरिनिर्दिष्टे संस्कृतगद्ये एव आगत। २ क भगिन्या। ३ क पराभव प्राप्ता। ४ क. कुल-गुणाश्च। ५ जाति विद्या रूप त्रीण्यपि निपतन्तु कन्दराविवरे। अर्थ एव परिवर्धतां येन गुणा प्रकटा भवन्ति॥ ६ क कन्दरे कुहरे। ७ क अकर्मिका, पुण्यप्रवररहिता। ८ क परिहासिता। ९ क जायमाने। १० क सकर्मिका भागिन्य। ११ क पितृभ्याम्। १२ क -भरणेन। १३ क नास्त्येतत। १४ क. 'अकर्मिका' अधिकम्। १५ मूलपुस्तके तु बान्धवार्पितरङ्गहीनमानहीनस्थला, एकशाटका सार्धमानार्पितस्थूलशाटकाऽपि'। क-पुस्तके तु बान्धवप्रदत्त रङ्गहीन मानहीन स्थूलमाटिका सार्धमानार्पित वराटिकाऽपि।

शाटिका, सार्द्धमानायितवराटिकाऽपि [1]निजगृहे प्रेषिता। मार्गे सा [2]गच्छन्ती मनसि आर्तध्यानं कुर्वाणा जीवं प्रति कथयति। यतः—

" [3]रे मन! [4]अप्पा खंचकरि चिंता [5]जाल म पाड। फल [6]तेतुं [7]ज पामीइं जेतुं [8]लिख्युं [9]निलाड " ॥६५॥

भ्राताऽपि कियदन्तर कृतमस्ति?। पुनर्मनो वालयति। यतः—

"मन तेतलुं म मागि जेतुं [10]देख [11]परतणें। [12]लिहीआं लेख(ष)इ लागि [13]अणलिख्यु लाभे नहीं" ॥६६॥

अतः कारणाद् मया भावेन कृतो धर्म एव सहोदरः, स्नेह कारणं मम शरणं भवतु। यतः—

"विघटन्ते मुताः प्रायो विघटन्ते च बान्धवाः। सर्वं विघटते [14]विश्वं [15] धर्मात्मानस्तु निश्चलाः" ॥६७॥

प्रियश्रीः [16]नुमुखी [17]श्यामसुखी गृहे समागता। अश्रुबिन्दुभिः स्वहृदयस्थलं सिञ्चयन्ती, किमु कोपाग्निना ताम्यन्ती, भूमिकामेव विलोकयन्ती भर्त्रा दृष्टा, पृष्टा च—[18] प्रिये! [19]कस्मादद्य त्वं विषादवती दृश्यसे? तव केनापमानो दत्तः, केन पराभवः कृतः। साऽपि न वक्ति, [20]यस्मात् कुलस्त्रियः पितृगृह—श्वसुरगृहापमानं कथमपि

१ क 'निज' इत्येव। २ क गच्छन्ति। ३ क अरे। ४ क अप्प नु। ५ क जालि म पाडि। ६ क तेतुअ। ७ क. जि। ८ क लषु। ९ क निलाडि। १० क. देषइ। ११ क परतनं। १२ क लहीइ लेखि। १३ क. अणलहीइ उ लाभइ। १४ ल. विश्वे। १५ क. धर्मा—ऽऽत्मानो तु निश्चलौ। १६ क. नास्ति। १७ क मुखा। १८ क 'प्राह' अधिकम्। १९ क. कथ त्वम्। २० क. प्रायः।

न कथयन्ति। यतः—

"आरतः परतो वार्त्ता न कुर्वन्ति कुलस्त्रीयः। मध्यमाः कलहं गेहे कारयन्ति परस्परम्" ॥ ६८॥

तथापि [1]पत्या बलेन पृष्टा सती सर्वं पितृगृहस्य [2]वृत्तान्तं कथितवती। यतः—

"पतिः पूज्यः पतिर्देवः, पतिः स्वामी पतिर्गुरुः। सुखे दुःखे कुलस्त्रीणां शरणं पतिरेव हि" ॥६९॥

[3]भर्त्रा ज्ञातम्-दारिद्र्यमेवापमानहेतुः। यतः—

"इश्वरेण स्मरो दग्धो, लङ्का दग्धा हनूमता। न केनापि हि दारिद्र्यं दग्धं सत्त्ववताऽप्यहो!" ॥७०॥

ततः [4]प्रियेण रुदन्ती सुन्दरी निवारिता। प्रिये! दुःखं मनागपि न [5]करणीयम्, स्वकर्मैव विचारणीयम्, पुण्यमेव समाचरणीयम्, देववचो हृदि धरणीयम्। यतः—

"कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि। अवश्यमेव हि भोक्तव्यं कृतं कर्म्म शुभाशुभम्" ॥७१॥

प्रिये! तदुपरि कोपस्त्वया न कार्यः, परगृहत्वात्। यस्माद् दशवैकालिकेऽप्युक्तम्[6]—

" [7]वहुं परघरे अत्थि विविहं खाइमं साइमं। न तत्थ [8]पडिसंकुप्पे इच्छा दिज्ज परो नवा" ॥७२॥

---

१ क. पतिबलेन। २ क सर्ववृत्तान्तम्। ३ क भद्रे!। ४ क पतिना। ५ क. 'दीयते आत्मनो दोषो न दोषो दीयते परे। न दोष स्वामिमित्राणा कर्मदोषो ही दीयते' इत्यधिकम्। ६ क. उक्त साधूनाम्। ७ 'वहु परगृहे अस्ति विविध खादिम स्वादिमम्। न तत्र प्रतिसकुप्येत-इच्छा दद्यात् परो नवा॥ दशवैकालिके पिण्डैषणानामकपञ्चमाध्ययनगतद्वितीयोद्देशके। ८ दशवैकालिके तु—पडिओ कुप्पे (पण्डित• कुप्येत)

तदनु सा प्रत्यहं [1]नमस्कारो-पसर्गहरस्तवगुणन-देववन्दन-कायोत्सर्गकरण-प्रतिक्रमणादि [2]पुण्यं करोति । श्रेष्ठी तु विशेषतोऽष्टप्रकारपूजां करोति । यथा—

'वरगंध१ धूव २ [3]अक्खएहिं३ [4]कुसुमेहिं४ पवरदीवेहिं५ । नेवज्ज६ फल७ जलेहिं य ८ जिणपूआ अट्ठहा [5]भणिआ' ॥७३॥

तत्समये श्रेष्ठिनः प्राचीनपुण्योदयो जातः । [6]प्रियश्रीर्नव्यगृहलिम्पनार्थं नगराद्बहिर्मृत्तिकाग्रहणार्थं गता । यावत् सा मृत्तिकां खनति तावता श्रेष्ठिपुण्यप्रकाशकम्-दारिद्र्यनाशकं निधानं प्रकटीभूतम्, तथैव [7]तया मृत्तिकया प्रच्छाद्य, स्वसदने समागत्य भर्तुर्निवेदितम् । श्रेष्ठिना तत्रागत्य, तद्विलोक्य राज्ञो विज्ञप्तम् । राज्ञा स्वसेवकाः श्रेष्ठिना सह प्रेषिताः । तत्र तैः खनयित्वा [8]निधानं राजसभायामानीतम् । राज्ञोऽग्रे मुक्तम् । यथायुक्तं कुरुत । नृपेण मन्त्रि-पुरोहितादयः पृष्टाः—किमत्र युक्तं कार्यम् ? । तैः प्रत्युक्तम्—निधान राजकीयमेव, किञ्चित्स्वल्पतरमस्याऽर्पणीयम् । यावद् राजा तत्र धनग्रहणार्थं स्वकरकमलं क्षिपति [9]तावता मनुष्यवाणी जाता-राजानं छलयामि, राजपुत्रं च छलयामि, कुबुद्धिदायक मन्त्रिणं गृह्णामि, पुरोहितं वा गृह्णामि । ततः सर्वे भीताः, दूरं स्थिताः । एत-

1 क नवकारएकअक्खर पाव फेडेइ सत्त अयराण । पण्णास च पएण सागरपणसय समग्गेण—नमस्कार-एक-अक्षर पाप स्फेटयति सप्तसागराणाम । पञ्चाशच्च पदेन सागरपञ्चशत समग्रेण । 2 क पुण्यानि । 3 क चुवखक्खएहिं । 4 क दीवेहि पवरकुसुमेहिं । 5 वरगन्ध-धूप-अक्षतै (चोक्षा-ऽक्षतै ; कुसुमे प्रवरदीपैं (दीपै प्रवरकुसुमै । नैवेद्य-फल-जलैश्च जिनपूजाऽष्टधा भणिता-गाथा एषा-विजयचन्द्रकेवलिचरिते । 6 क एकदा । 7 क तत् । 8 क. नास्ति । 9 क ततो ।

निधानं [1]भूताधिष्ठितं वर्त्तते । एतस्यैव सकलं समर्पणीयम् । एतस्यैव धारकं भवतु । ततो नृपेण पासदत्तश्रेण्ठी पृष्टः-यदा निधानं त्वया दृष्टम्, तदा तत्र [2]कोऽप्यभूत्, केनापि दृष्टं श्रुतं वा ? । [3]श्रेष्ठी प्राह—स्वामिन् ! अहं जानामि, मद्भार्या च जानाति । तृतीयः कोऽपि नाभूत् । नृपः प्राह—तर्हि ममाग्रे त्वया कस्मात् कथितम् ? । स्वामिन् ! मम परधनग्रहणे नियमोऽस्ति, भूमिका सर्वाऽपि नरेन्द्रसत्का-तद्गतनिधानमपि । [4]श्रेष्ठी प्राह—तेन कारणेन मया न गृहीतम् । यतः—

"पतित विस्मृतं नष्टं स्थितं स्थापितमाहितम् । अदत्तं नाददीत स्वं [5]परकीयं क्वचित् सुधीः" ॥७४॥

राजेन्द्र ! गृहस्थस्य व्यवहारशुद्धैौ वाऽर्थ[6]योजनं युक्तम् । उक्तं च—

[7]ववहारेण सुद्धेण सुद्धो अत्थो पवड्ढइ । धन्नाइं देह-पुत्ति-त्थी धम्माणुठ्ठाणसुद्धता ॥७५॥
[8]सुद्धेणं चेव देहेणं धम्मजुग्गो अ जायइ । ज जं कुणइ किच्चं तु त तं सफलं भवे ॥७६॥

ततस्तन्नियमेन सन्तुष्टो राजा तस्य निधिं समर्पयामास । तत्र पुण्येन निष्ठतं तत्रैव भवतु । श्रेष्ठी चिन्तयति इह लोक एव नियमफलं जातम् । उक्तम्—

१ क. भूताश्रितम् । २ क 'कोऽपि नाऽभूत्?' ३ क श्रेष्ठिनोक्तम् । ४ क नास्ति । ५ क. तृणमात्रमपि क्वाचित । ६ क धनोपार्जन ७ व्यवहारेण शुद्धेन शुद्धोऽर्थ प्रवर्धते । धान्यानि देह-पुत्र-स्त्रिय धर्मानुष्ठानशुद्धता । ८ शुद्धेन एव देहेन धर्मयोग्यश्च जायते । यत् यत् करोति कृत्य तु तत् तत सफल भवेत् ।

परार्थग्रहणे येषां नियमः शुद्धचेतसाम्। अभ्यायान्ति श्रियस्तेषां स्वयमेव स्वयंवराः ॥७७॥

श्रेष्ठी निधानं लात्वा स्वगृहे प्राप्तः, धर्म्मफलमिदं [1]ज्ञापितवान्। [2]तद्धनेन व्यवहारी जातः। नव्या आवासाः कारिताः। नव्याऽट्टानि कारितानि। व्यवसाय च करोति—वणिक्पुत्र-दास-दासी-महिषी-तुरङ्गमादि-परिवारो जातः। कुटुम्बमध्ये महत्त्वं चाभूत्। यतः—

"यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् [3]विवेकी।
स एव वक्ता स च [4]दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति[5]" ॥७८॥

ततः [6]प्रियङ्करनामपुत्रः प्रौढो जातः, तस्य लेखशालाकरणं प्रारब्धम्, [7]तन्मुहूर्त्तं गृहीतम्। यतः—

शुभवेलाकृतं कार्यं [8]वृद्धिलाभाय जायते। सुक्षणे स्थापितो [9]भूयात् गौतमः सर्वलब्धिभृत् ॥७९॥

ततः [10]स्वजननिमित्तं गृहे पकान्नानि क्रियन्ते स्म। तदाऽवसरज्ञा प्रियश्रीः पतिं प्राह—विवाहे मम भगिनीभिर्हसितम्, ममापमानं दत्तम्, ताः सर्वा निमन्त्र्य स्वगृहे भोज्यन्ते, तासां [11]सपरिवाराणां [12]वस्त्रादिगौरवं क्रियते

१ क. उक्तं च–योऽपि सोऽपि ध्रुवं ग्राह्य नियम पुण्यकाङ्क्षिणाम्। सोऽत्पोऽप्यनत्पलाभाय कमलश्रेष्ठिनो यथा। अत्र कमलश्रेष्ठिकथा। २ क. पासदत्तश्रेष्ठी। ३ क गुणज्ञ। ४ क. माननीय। ५ क. -न्ते। ६ क नामा। ७ क मुहूर्तो गृहीत। ८ क. वृद्धलाभाय। ९ क. भव्य.। १० क स्वजनगौरव–। ११ क. परिवाराणाम्। १२ क वस्त्रादिना।

तदा वरम्, अयमवसरो वर्तते । यतः—

[1]अवसर जाणी उचिअ करि, अवसर [2]लही म [3]भूल्लि । [4]वार वार तुं जाणजे, अवसरि लहिसि न मूल्लि ॥८०॥

[5]करचलुअपाणिएण वि, अवसरदिन्नेण मूच्छिओ जियइ । पच्छा मुआण [6]सुंदर ! घटसयदिन्नेण किं तेण[7]? ॥८१॥

तासां [8]पुनः स्वपुण्यफलं दर्शयामि । श्रेष्ठ्याह—प्रिये ! तासां किं गौरवं क्रियते ? तासामुपरि कः [9]स्नेहः ? ताभिर्यथा कृतं तथा करिष्यामि । उक्तं च—

कृते प्रतिकृतं कुर्यात् [10]हसिते हसितं क्रियात् । त्वया मे लुञ्चितौ पक्षौ मया ते मुण्डितं शिरः ॥८२॥

पत्न्याह—उत्तमानामपकारकृतेऽपि गौरवकरणमेव युक्तम् । यतः

[11]छेहे [12]दीठे छेह [13]हीआ म [14]दाखि(षि)स आपणुं । [15]करि [16]बहुतेरो नेह ओछा ते [17]उमटसे[18] ॥८३॥

[19]कृतघ्ना बहवस्तुच्छा लभ्यन्तेऽत्र कलौ जनाः । कृतज्ञा उत्तमाः स्तोका अपकारे हितङ्कराः ॥८४॥

---

१ अवसर ज्ञात्वा उचित कुरु अवसर लब्ध्वा मा भ्रश्य । वार वार त्वं जानीहि अवसरो लप्स्यते न मूल्येन । २ क. लहिय । ३ क भूलि । ४ क. गऊं धन वली बाहुडि अवसरि न मलि बहु मुलि । ५ करचुलुकपानीयेनाऽपि अवसरदत्तेन मूर्छितो जीवति । पश्चाद् मृताना-सुन्दर ! घट-शतदत्तेन किं तेन ? । ६ क सुदरी । ७ क. तस्स-क-पुस्तके अनयोर्गाथयोर्व्यत्ययक्रम । ८ क. निजपुण्य- । ९ क. 'क. कोप ?' अधिकम् । १० क हिंसिने प्रतिहिंसितम् । ११ क छेहइ । १२ क दीठि । १३ क. हिआ । १४ क दाषासि । १५ क. करे । १६ क बहुतेरु । १७ क. उमेटसइ । १८ क्षये दृष्टे क्षय हृदय ! मा दर्शय आत्मनः । कृत्वा बहुतर स्नेहमल्पास्ते उल्लसिष्यन्ति । १९ क 'अन्यच्च' इत्याधिकम् ।

ततः [1]श्रेष्ठी स्त्रीकथनात् तद्भगिनीनां निमन्त्रणाय स्वजनान् प्रेषयामास। ते तत्र प्राप्ताः, [2]तेषां प्रतिपत्तिः स्तोकैव कृता, निमन्त्रणं दत्तम्। ताः कथयन्ति—आजन्ममध्ये [3]भगिनी न दृष्टा, अत्राऽकारणं केन हेतुना? तैरुक्तम्—पुत्रस्य लेखशालाकरणमस्ति, तदुत्सवे [4]यूयमागच्छत। [5]ताः प्राहुः—युष्माभिर्न वाच्यम्, आगता एव ज्ञेयाः। [6]तथापि तैर्भृशमाग्रहः कृतः। पुनरप्यस्मान् श्रेष्ठी प्रेषयिष्यति। तदा ताः प्रोचुः—पुनः प्रेषणं ज्ञातम्, [7]दरिद्रिणां गृहे भोजनार्थं गमने लोका अपि हास्यं कुर्वन्ति, यतः—

अन्नं शाकं घृतं नास्ति, दधि दुग्धं [8]गुडा नहि। [9]खाद्य-स्वाद्यादिकं नास्ति तद्गेहे भुज्यते किमु? ॥८५॥

[10]महेभ्यानां तद्गृहगमने धनमेव लगति। ततस्ता उपहासं कृत्वा स्थिताः। ताभिर्न मानितम्, ते पश्चाद्वलिताः।

---

१ क श्रेष्ठिकथनात्। २ क. ताभि। ३ क. भगिनीगृह न दृष्टम्। ४ क. तूर्यम्। ५ क प्राह-युष्माभिर्वाच्यम्-। ६ क नास्त्येतत्। ७ क दरिद्राणाम्। ८ क च शर्करा। ९ क ताम्बूल दृश्यते नैव भोजन तत्र कीदृशम्?। १० अत पाठात् क-पुस्तके महान् भेद.—'मान विनैव इत्युक्तास्ते पश्चाद् ययु'। सर्वोऽपि तदुक्तवृत्तान्त श्रेष्ठि-श्रेष्ठिन्योऽग्रे कथितः। तत् श्रुत्वा श्रेष्ठी स्वप्रिया प्रति उवाच-साम्प्रत किं कर्तव्यम्?। प्रिया प्राह—स्वामिन्! महताऽऽदरेण अपि मम भगिन्यादय आकारणीया। स्वसज्जनसमूह विना महोत्सवा न शोभन्ते। यत.—सरासि तरुभि (?) गेह स्त्रियाऽमात्येन पार्थिव। स्वसज्जनैरेव शोभन्ते धर्मकर्ममहोत्सवा.॥ इत्युक्त श्रेष्ठी पुनरपि स्वपुरुषान् प्रेषयामास। तैस्तत्र गत्वा महान् आदर कृत। ताभिर्मानितम्। यत -भोजन नावलोकन्ते क्षणमात्रविनश्वरम्। ईहन्ते गुणिनो नित्यमादर स्वजनैः सह॥ तत सर्वा अपि नानालकार-विभूषिताङ्गभागा महताऽऽडम्बरेण प्रियाश्रिय समाजग्मु। प्रियश्रिया स्वागतप्रश्नपूर्व स्थानदानादिना अत्यन्त तासा-

ततः प्रियश्रीः प्रियं प्राह—यूयमेव स्वयं गच्छत, तदनु श्रेष्ठी तुरङ्गे चटित्वा स्वयं निमन्त्रणाय तद्गृहेऽगमत्। तुरङ्गमवस्त्राद्याडम्बरं दृष्ट्वा ताः प्रतिपत्तिं चक्रुः। श्रेष्ठी स्वप्रियास्वजनान् बहुमानपूर्वकमाकार्य समागतः। सर्वेषामतिथीनां स्वस्वजनवर्गेभ्यः प्रतिपत्तिमादरं च कारयामास। यतः—

पानीयस्य रसः शैत्यं, भोजनस्यादरो रसः। आनुकूल्यं रसः स्त्रीणां, मित्रस्य वचनं रसः ॥८६॥

सर्वेषामुत्तारका[1] दत्ताः। तुरङ्गम-वृषभादीनां गुड-घृत-खाण-वारिप्रमुखं दापयामास। भगिनीनां प्रियश्रीः प्रतिपत्तिं कुर्वती कथयति—अद्य मम गृहे भवदागमनेन हर्षो जातः। भगिन्यो गृहाडम्बरादि दृष्ट्वा हृदये विस्मयं चक्रुः। परं पुरुषभाग्ये को विस्मयः? यत उक्तम्—

दाने तपसि शौर्ये च विद्यायां विनये नये। विस्मयो नहि कर्तव्यो बहुरत्ना वसुन्धरा ॥८७॥

ततः श्रेष्ठी भोजनावसरे सर्वस्वजनानां स्थाली-वर्तुलिकादि मण्डयित्वा शर्करापानीयं पूर्वं परिवेषयामास।

सन्मानं चक्रे। प्राते च भोजनावसरे नाना देशाऽऽयाता-ऽऽपूर्व-सरका-वस्तुपरिवेषणैर्बहुमानपूर्वं भोजनानि ददौ। ताश्च अत्यन्तं तुष्टाः। यतः—
न मिष्टा शर्करा लोके नाऽमृतं न च गोस्तनी। इष्टमिष्टतरं लोके भोजनं मानपूर्वकम् ॥ कियद्भिर्दिनैर्महोत्सवे अतिक्रान्ते नानाऽऽभरण-दुकूलप्रदानेन सत्कृता, तद्विनयविवेकवचनचातुरी-चमत्कृता परस्परं वदन्ति स्म—एत्राऽपि स्त्री वर्तते इति, अन्य परं सदृशम्। १ भाषायाम्-'ऊतारा' इति।

ततः कुङ्कणकदलीफल–कोहलापाक–खा(पा)रिक–ख(प)जूर–खां(पां)ड–गुंदवडा–घेवर–चारवी–चारोली–जलेवी–टोपरां–दाडिम–द्राख(प)–नीलीद्राख(प)–फणस–फीणी–साटा–वरसोला–निमजां–पिसतां - सिता–अखो(पो)ड–वदाम–सेलडी–भृंगाटिक–प्रमुखफलावली परिवेषिता। ततः खा(पा)जां–सुंहाली–तिलसांकली–ख(ष)सख(प)स–सांकुचीमांडी–मुरकी–सेवइआलाड्डू–दलीआलाड्डू–झगरीयालाड्डू–मोतीआलाड्डू–चारोलीलाड्डू–वाजणालाड्डू–प्रमुखानां पक्वान्नानि परिवेषितानि। कासांचन स्त्रीणां प्रीसी लापसी, खां(पां)ड सरसी, स्त्री जिमें हसी, जीभे जाइ खि(षि)सी। कासांचित् पापडी, किस्युं जिम जीभ वापडी। तदनु दूवलीइं खां(पां)ड्यो सवलीए छड्यो, हलूआ हाथवालीए सोह्यो, फ़टरी स्त्रीए धोयो, चतुरस्त्रीनो रांध्यो, सरहरो, परहरो, सुंहालो, अणीआलो, दूवले पेटे जाणे के फोडी नीसरसे, जे जिमसे तेहने घरनुं जिमण नही विसरस्ये। एवंविध रायभोगशालिसत्काः कूराः परिवेषिताः। ततो मूंगदाली वाने पीली, नेत्रे सीली परिवेषिता। ततः सद्यस्तावितं साक्षादमृतं घृतं परिवेषितम्, ततो वडां घणे घोले भीनां, मरीयाली खां(पां)डमी पापड तल्या, मुहमणी हाथवल्या, दरिद्री ते जिमणनें टलवल्यां, राइतां, चिणा, डोडी, टींडोरां, सालणे भाणां भरियां तुरियां ते करिआं तीखां पां)–कडूआ–कसायलां–मधुराचतुः प्रकारेण–दुर्जनना हीआ सरिखां(पां तीखां(पां', पाडोसिणीनी जीभ जिस्यां कडूआं, श्रीगुरुना वचन सरिखा(षा) कसायला, मायना स्नेह सरिखा(पा), मधुरा एवंविधानि शाकानि परिवेषितानि। ततः प्रीस्यां घोलगल्यां, बोल्ले

माथे पल्यां, नथी देशाउरे भम्या, इणीपरें नथी जिम्यां। केषांचिज्जनानां धणदे-धरदे-गजदे-तक्रत्रयं परिवेषितम्। याभिर्हसितं तासां क्रमध्ये गजदेतक्रं स्वच्छं चन्द्रबिम्बं परिवेषितम्। क्रूरः कण्ठे लग्न इष्टवत् ताभिः खुं(घुं)कारितम्, गले खरखरो जातः। तदा प्रियश्रिया प्रोक्तम्—हे भगिन्योऽद्यतनं भोजनं सामान्यं मद्गृहसत्कं खरखरदस्ति। ताभिरुक्तम्—हे भगिनी! भोजनं न परं तव वचनम्। त्वया अपमानफल दर्शितम्। ततस्तया सुतरा दधीनि मुक्तानि। ततः कर्पूर-लविङ्ग-एला-केसरमिश्रताम्बूलदानं कृतम्, सर्वेषां भोजनगौरवेण चमत्कारो जातः। स्वजनैः प्रोक्तम्—अस्य भार्यया पुण्यवत्या निधानं लब्धम्, राज्ञो दर्शितम्, राज्ञा अस्यैव दत्तम्, राज्ञो मानमस्ति। सर्वेऽपि स्वजनाः प्रोचुः—अस्य श्रेष्ठिनः पूर्वपुण्यफलमिदम्। यतः—

सुकुलजन्म विभूतिरनेकधा, प्रियसमागमसौख्यपरम्परा। नृपकुले गुरुता विमलं यशो, भवति पुण्यतरोः फलमीदृशम्।८८।

पासदत्तेन महेभ्यानां सर्वेषां स्वजनानामपूर्ववस्त्राणि दत्तानि। प्रियश्रिया स्वभगिनीनां पट्टकूलानि दत्तानि। तदनु प्रियङ्करपुत्रो महता महेन लेखकशालायां पण्डितपार्श्वेऽध्यापनाय मुक्तः। भगिन्या स्वभगिन्यः साग्रहं सादरं सस्नेहं कियद्दिनानि स्थापिताः। परं स्वसारः सर्वा अपि लज्जिताः अन्योन्यं कथयन्ति—उत्तम-मध्यमयोरन्तरं ज्ञेयम्। एषाऽपि स्त्री वर्त्तते, परं गम्भीरत्वम्, चातुर्यम्, कीदृशं वर्त्तते स्वजनेषु वात्सल्यम्? यतः—

वाजि-वारण-लोहानां काष्ठ-पाषाण-वाससाम्। नारी-पुरुष-तोयाना-मन्तरं महदन्तरम् ॥८९॥

[1]आत्मभिर्हास्यं कृतम्, तदा न [2]युक्तं कृतम्। यतः—

हास्यान्महान्तो लघवो भवन्ति, [3]हास्याद् वनाको (?) वनितां च मुक्तवान्।
ज्ञानं गतं क्षुल्लवरस्य हास्यात्–[4]हास्यात् स्वकीया रिपवो भवन्ति ॥९०॥

ताभिः स्वभगिनी क्षामिता। सा वक्ति—भवतीनां किमपि दूषणं नास्ति, मम प्राक्कृताऽशुभकर्मणः फलम्। ता आहुः—अस्माभिस्तदा मुधा धनगर्वेण त्वमपमानिता। अन्यैरपि कैश्चिद् धन–स्वजनसंयोग–भोग–पुत्राद्यहङ्कारो न कार्यः। यत उक्तम्—

पूर्णोऽहमर्थैरिति मा प्रसीद रिक्तोऽहमर्थैरिति मा विषीद। रिक्तं च पूर्णं भरित च रिक्तं, करिष्यतो नास्ति विधेर्विलम्बः॥९१॥

कल्लोलचपला लक्ष्मीः सङ्गमाः स्वप्नसन्निभाः। [5]वात्याव्यतिकरोत्क्षिप्ततूलतुल्यं च यौवनम् ॥९२॥

ततः श्रेष्ठिना सर्वे स्वजना विसर्जिताः, स्वस्वस्थाने प्राप्ताः। प्रियंङ्कर उद्यमेन शास्त्राणि पठति। पण्डितोऽपि तस्य विनयगुणरञ्जितो हितेन विद्यां दत्ते। यतः—

---

१ क यद् हास्य। २ क तद् अयुक्त। ३ क–पुस्तके एव एतत् पद्यम्। अत्र पद्ये 'वनाको' इति न गम्यते कदाच 'पिनाकी' इति स्यात। ४ क हास्याच्च मित्राणि भवन्ति शत्रव। ५ वातानां समूहो वात्या।

विनयेन विद्या ग्राह्या, [1]विद्या सर्वात्मना बुधैः। धनार्जनं द्वितीये च तृतीये धर्मसंग्रहः ॥९३॥

तदनन्तरं श्रीगुरुसमीपे प्रियङ्करो धर्मशास्त्राणि पठति। गुरवोऽपि विनयगुणेन तं शिक्षयन्ति। यतः—

विद्या भवन्ति विनयाद्विनयाच्च वित्तं, नृणां भवेच्च विनयान्निजकार्यसिद्धिः।
[2]धर्मोऽपि शश्वद्विनयाद्विनयात् सुबुद्धि-र्ये शत्रवोऽपि विनयात् सुहृदो भवन्ति ॥९४॥ दशवैकालिकेऽप्युक्तम्—

[3]मूलाओ खंधप्पभवो दुमस्स खंधाओ पच्छा [4]विरुहन्ति साहा।
साहप्पसाहा विरुहन्ति पत्ता तओ [5]वि पुप्फं च फलं रसो अ ॥९५॥
एवं धम्मस्स विणओ मूल परमो अ से मुक्खो। जेण किर्त्तिं सुअं सिग्घं नीसेसं चाभिगच्छइ ॥९६॥

---

१ क-पुस्तके तु पुष्कलेन धनेन वा। अथवा विद्यया विद्या तुर्योपायो न विद्यते ॥ सिंहासणे निसन्न सोवाग सेणिओ नरवरिंदो। विज्ज मग्गइ पयय इय साहुजणस्स सुअविणओ—(सिंहासने निषण्ण श्वपाक (चाण्डालम्) श्रेणिको नरवरेन्द्र। विद्या मार्गयति प्रकृतमिति साधुजनस्य श्रुतविनय ॥) स्तोकदिनै स बहुविद्याकुशलो जात। प्रथमे वयसि ग्राह्या विद्या सर्वात्मना बुधै—इत्यनन्तरम्। २ क यशश्च। ३ मूलात् स्कन्धप्रभवो द्रुमस्य स्कन्धात् पश्चात् विरोहन्ति शाखा.। शाखा-प्रशाखा विरोहन्ति पत्राणि ततोऽपि पुष्प च फल रसश्च ॥ एव धर्मस्य विनयो मूल परमश्च तस्य मोक्ष। येन कीर्त्ति श्रुत शीघ्र निःशेष चाभिगच्छति-एतद् गाथाद्वय दशवैकालिकनवमाध्ययने-विनयसमाधि-नामके प्रथम-द्वितीयम्। ४ दशवैकालिके तु 'समुविति'-समुपयन्ति। ५ दशवै-'सि'-तस्य।

पितरस्त एव ये [1]सूनुं बाल्येऽपि भाणयन्ति। यतः—

रूप-यौवनसम्पन्ना विशालकुलसम्भवाः। विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥९७॥

पण्डितेषु गुणाः सर्वे मूर्खे दोषास्तु [2]केवलाः। तस्माद् मूर्खसहस्रेभ्यः[3] प्राज्ञ एको न लभ्यते ॥९८॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं [4]देवता, विद्या राजसु [5]पूजिता नहि धनं विद्याविहीनः पशुः[6] ॥९९॥

प्रियङ्करः सम्यक्त्व-रत्नत्रय-नवतत्त्व-द्वादश[7]व्रतविद् महाश्रावको जातः। श्रीगुरुभिरुक्तम्–महानुभाव[8]! लघुत्वेऽपि धर्मः कार्यः। यतः—

[9]दीहा जंति वलंति नहु जिम गिरिनिज्झरणाइं। लहुअ लगें जीव धम्म करि सुइं [10]निचिंतो कांइं? ॥१००॥

[11]जरा जाव न पीडेइ वाही जाव न वड्ढइ। जाविंदिया न हायिंति ताव धम्मं समायरे ॥१०१॥

---

१ क. स्वपुत्र। २ क लम्। ३ क सहस्रेण। ४ क दैवतम्। ५ क पूज्यते। ६ क-पुस्तके तु इतोऽधिकमिदम्-प्राप्ते मद्देभ्यवर्गेऽपि न्यायित्री वर्णप्रदिनने (?) मुर्खपुत्रोऽवदत् तत्र द्वारस्थाने कपाटकम् ॥ पुत्रमूर्खकथा। ७ क-प्रतिपत्त्या। ८ क-ग। ९ दीर्घाणि यान्ति वलन्ति न खलु यथा गिरिनिर्झरणानि। लाघव यावत् जीव! धर्मं कुरु सुप्तो निश्चिन्तः कथम्? १० नीचिंतो। ११ जरा यावद् न पीडयति व्याधिर्यावद् न वर्धते। यावदिन्द्रियाणि न हीयन्ते तावद् धर्मं समाचरेत्।

ततः प्रियङ्करः प्रत्यहं प्रतिक्रमण-[1]पूजा-प्रत्याख्यान-दया-दानपुण्यानि करोति[2]। श्रीगुरुभिस्तस्य धर्मश्रद्धां ज्ञात्वा उपसर्गहरस्तवस्याम्नायाः [3]कथिताः। उवसग्गहरं स्तवन त्वया मौनेन पवित्रीभूय प्राङ्मुखमेकान्ते गुणनीयम्। एतत्स्तवनमध्ये श्रीभद्रबाहु- श्रुतकेवलिना महामन्त्रा अनेके गोपिताः सन्ति। येन धरणेन्द्र-पद्मावती-वैरोट्यादयः सान्निध्यं कुर्वन्ति। अनेनाऽखण्ड [4]१२००० [5]गुणितेन सर्वकार्याणि सिध्यन्ति। दुष्टग्रह-भूत-प्रेत-[6]शाकिनी-[7]मारी-ति-रोग-जला-ऽनल-व्यन्तर-दुष्टज्वर-विषधर-विष-चौर-राज-रणादिभयानि स्तवनस्मरणेन दूरतो यान्ति। सुखसन्तान-समृद्धिसंयोग-मृतवत्सापुत्रप्रापण[8]कार्याणि स्युः। उक्त च—

"उपसर्गहरस्तोत्रं ध्यातव्यं [9]भावतस्त्वया। कष्टे च प्रथमा गाथा गुणनीया विशेषतः" ॥१०२॥

[10]तदनु प्रियंकरेणोपसर्गहर[11]स्तवनगुणननियमो गृहीतः। स प्रत्यहं गुणयति, नियमभङ्गे षड्विकृतित्यागं करोति। तस्य नित्यस्मरणात् सिद्धमन्त्रसदृशमभूत्। यद्यत्कार्यं करोति तत्तत्सफलं स्यात्। पुत्रप्रियङ्करः [12]स्वपितुः कथयामास। तातपादा! यूयं धर्ममेव कुरुत। यत उत्तराध्ययनेऽप्युक्तम्—

[13]जा जा वच्चइ रयणी न सा पडिनियत्तइ। धम्मं तु कुणमाणस्स सहला जंति राईओ ॥१०३॥

१ क. देव-। २ क 'नव तत्त्वानि वेत्ति' इत्यधिकम्। ३ क प्रोक्ताः। ४ क. २००। ५ क. गुणने। ६ क-व्यन्तर-। ७ क-डाकिनी-। ८ क-प्राणद-। ९ क भाविना। १० क. तत। ११ क-स्तोत्र। १२ क. पितु। १३ या या व्रजति रजनी न सा प्रतिनिवर्तते। धर्मं तु कुर्वत सफला यान्ति रात्र्य।

[1]गृहभार निर्वहिष्यामि, व्यवसायं करिष्यामि। पुत्रास्त एव ये स्वपितुश्चिन्तामुत्तारयन्ति। उक्तं च—

एकेनापि सुपुत्रेण सिंही [2]स्वपिति निर्भयम्। सहैव दशभिः पुत्रै-र्भारं वहति गर्दभी[3] ॥१०४॥

एकदा पित्रा प्रियङ्करः आसन्ने [4]श्रीनामग्रामे उद्ग्राहणिकार्थं[5] प्रेषितः। तां कृत्वा सन्ध्यायां पश्चाद्वलन् स भिल्लैर्बद्धः। श्रीपर्वत[6]दुर्गे स्वस्थाने नीतः। स्वसीगाल[7]राज्ञो ज्ञापितः। स कारायां [8]क्षेपितः। ततस्तस्य पितरौ [9]सायं पुत्रमार्गं विलोकयतः[10] स्म। हे पुत्र! त्वमद्यैव प्रेषितः नागतः, कस्मात् रुष्टः? केनापि पराभूतो वा? वत्सा[11]ऽत्राऽऽगच्छ, स्वं दर्शय। कदा अतः परं त्वां कस्मिन्नपि कार्ये न प्रेषिष्यावः। माता प्राह—वत्स! प्रियङ्कर! मम त्वमेवैकः पुत्रोऽसि, दुःखेन पालितोऽसि, इष्टः, कान्तः, मनोज्ञः, मनोहरणः, विश्वस्तः, सम्मतः, बहुमतः, अनुमतः, आभरणकरण्डकसमानः, रत्नभूतः, अस्मज्जीवितोच्छ्वासकः,[12] हृदयानन्दनः, उम्बरपुष्पमिव दुर्लभः स्वप्नेऽपि, किं पुनर्दर्शनेनापि[13] इति—पुत्रगुणान् गृह्णन्ती विलापान् करोति। यतः—

[14]अवरं सव्वं दुहं जणाण कालंतरेण वीसरइ। वल्लहविओगदुक्खं मरणेण विणा न वीसरइ ॥१०५॥

---

१ क अह। २ क स्वपाते। ३ क-पुस्तकेऽधिकमिद पद्यम् -अपि च-कि जातैर्बहुभि, करोति हरर्णापुत्रैरक.र्गक्षमे, पर्णेऽप्येघनान्तरे न ज्वलिते ये सार्धमुन्नत्रस्तानि। एकेनाऽपि करीन्द्रकुम्भदलने नापारसारात्मना सिंह दीर्घपराक्रमेण गुरुणा पुत्रेण गुआगते ॥ ४ क-वास-। ५ क-र्थे। ६ क-र्गे। ७ क-सीमाला-। ८ क. क्षिप्त। ९ क. सप्याग्ना। १० क-न्ति। ११ क. धा-। १२ क-तोल्लसक। १३ क 'ज्ञाता गर्मकाग्रा' इति अधिकम्। १४ अपरं सर्वमपि दुःखं जनाना कालान्तरेण विस्मर्यते। वल्लभवियोगदुःख मरणेन विना न विस्मर्यते।

अत्र पुत्रं विना गृहं शून्यमिव दृश्यते। उक्तं च—

अपुत्रस्य गृहं शून्यं दिशः शून्या ह्यबान्धवाः। मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥१०६॥

तावता केनाप्युक्तम्—श्रेष्ठिन्! त्वत्पुत्रं बद्ध्वा भिल्लाः श्रीपर्वते लात्वा गताः। तच्छ्रुत्वा दुःखितौ जातौ। विशेषेण नमस्कार-उपसर्गहरस्तवन-गुणन-भोगकरणादिपुण्यपरौ जातौ। यतः—

वने रणे शत्रु-जला-ऽग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥१०७॥

तदा श्रीपासदत्तस्य [1]देवतोक्तं वचः स्मृतम्। ततोऽगुरु-कस्तूरीप्रमुखभोगं लात्वा राजवाटिकामध्ये देवाधिष्ठिताम्रवृक्षस्थाने भोगं कृतवान्। तदुक्तम्—भो देव! त्वया पुत्रस्य राज्यं कथितमभूत्, प्रत्युत कष्टं जातम्, न मृषा भाषिणो देवाः। यतः—

प्रतिपन्नानि महतां युगान्तेऽपि चलन्ति न। अगस्तिवचनैर्बद्धो विन्ध्योऽद्यापि न वर्द्धते ॥१०८॥

कष्टे च त्वमेवास्माकं शरणम्। देवः प्रोचे—श्रेष्ठिन्! मा चिन्तां कुरु, देवसत्का वागभूत्। यथा—

सुणि पासा मुझ वचनविलासा मत [2]मूकीस तूं [3]दुःखनीसासा। देव हूआ प्रियंकरदासा [4]अवस परणसे पंचमवासा॥१०९॥

इमां देववाणीं श्रुत्वा श्रेष्ठी हृष्टो गृहेऽगात्। भार्याया ज्ञापितम्, साऽपि सहर्षा [5]भूता। इतः श्रीपर्वते

१ क. देवेनोक्त। २ क मुकिस। ३ क दुष। ४ क आवसइ पचामि वासा। ५ क. ऽभूत्।

प्रियङ्करस्य यज्जातं तत् शृणुत। तत्र [1]प्रातः प्रियङ्करः सोमालराज्ञा पल्लीपतिनाऽऽकारितः, पृष्टश्च—कस्त्वम्? स आह--अशोकनगरवासी निर्द्धनो वणिग्—आसन्नग्रामेषु पोट्टलकं कृत्वा निर्वाहं करोमि। मत्पिता तु वृद्धः, माताऽपि वृद्धा। अहं न जाने केनापि कारणेन त्वज्जनैर्बद्ध्वा अत्रानीतः। नृपः प्राह—अशोकनगरस्थानी[2] अशोकचन्द्रो राजाऽस्मद्वैरी वर्त्तते। तेन [3]तन्नगरवासिनः सर्वेऽपि वैरिण एव। अपरम्, मज्जनैर्मन्त्रिपुत्रस्य ग्रामं गतस्य मार्गो बद्धः, परं स मन्त्रिपुत्रो हस्ते न चटितः, तत्स्थाने त्वं बद्धः। प्रियङ्करः प्राह—स्वामिन्! मम वराकस्य बन्धनेन किम्? मां कोऽपि नगरे [4]नोपलक्षयति। रोगोऽन्यस्य, सेकप्रदानमन्यस्य। चक्षुषी [5]दुःख(य)तः, कर्णौ बध्येते। रावणेन अपराधः कृतः, कपिभिः समुद्रो बद्धः। राज्ञा सह वैरम्, अहं निरपराधो वणिग् बद्धः। उक्तं च—[6]अन्नेहिं कयवराहे अन्नस्स पडइ मत्थएऽणत्थो। रावणकएऽवराहे [7]कविहि बद्धो समुद्दो अ ॥१०९॥

[8]तद्वचनचातुर्येण पल्लीपतिर्विस्मितः कथयति—हे कुमार! त्वां मुञ्चामि, यदि त्वं मत्कथितं करोषि। कुमारेण प्रोक्तम्—तत्किम्? राजा प्राह—मत्सेवकान् त्वद्गृहे रहोवृत्त्या स्थापय दिनसप्तकम्, यथा ते तत्र

१ क प्राप्त। २ क स्वामी। ३ क तत्र। ४ क –ष्य। ५ क द्विष्यत। ६ अन्यै कृतापराधे अन्यस्य पतति मस्तकेऽनर्थ। रावण-कृतेऽपराधे कपिभिर्बद्ध समुद्रश्च। ७ क गिरिहि। ८ क–पुस्तके अतोऽधिकमिदम्–पल्लीश आह–दुष्टाशयाद्दुष्टेऽपि दण्ड पताति दारुण। मत्कुणानामविष्ठानात् ख(प)ट्वा दण्डेन ताड्यते॥ तत कुमार प्राह–तथापि शिष्टाऽशिष्ट विलोकनीयम्। तद्वचनेन।

स्थिता राजपुत्रम्, मन्त्रिपुत्रं वा वद्ध्वा अत्रानयन्ति[1], स्ववैरं वालयामि। कुमारः प्राह—अकर्त्तव्यं सर्वथा न करिष्यामि, यद् भवति तद्भवतु। यतः—

अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि। सुकर्तव्यं तु कर्तव्यं प्राणैः कण्ठगतैरपि ॥११०॥

राजविरुद्धकरणे जीवितव्यनाशः स्यात्। उक्तं च—

देश-ग्राम-नृपादीनां विरुद्धानि सृजन्ति ये। इहैव वन्धनं क्लेशं मरणं प्राप्नुवन्ति ते ॥१११॥

राजा रुष्टः सेवकान् समादिशत्—एनं खो(षो)डके[2] क्षिपत। ततस्तैः (खो)षोडके क्षिप्तः, तत्परितो रक्षकाः स्थिताः। कुमारश्चिन्तयति—श्रीगुरुभिरुक्तमभूत्—विषमसङ्कटे पतिते विशेषत उपसर्गहरस्तवनं गुणनीयम्। ततस्तेनैकचित्तेन 'उवसग्गहरं पासं' इति स्तवनं १२ सहस्रवारं गुणितम्। तदवसरे वैरिनृपस्य मनो वलितम्। एष वराको मुच्यते। अनेन स्थापितेनापि किं स्यात्। तदा तत्सभायां ज्ञानवान् [3]सिद्धः कोऽपि समागतः। आशीर्वचनं दत्त्वोपविष्टः। राज्ञा पृष्टम्-स्वागतम्। स प्राह—

[4]सौम्यदृष्टिर्नरेन्द्राणां प्रजानां हितवाञ्छकः[5]। [6]आत्मनश्चित्तवात्सल्यात् सुखितोऽस्मि निरन्तरम् ॥११२॥

राज्ञा पुनः [7]पृष्टः-किं[8] वेत्सि?। तेनोक्तम्—

१ पु० ति। २ खोडक काष्ठमयी कारा मरुदेशप्रसिद्धा। ३ क विद्यासिद्ध.। ४ क. सौम्यदृष्ट्या। ५ क हितवाक्यन। ६ क. आत्मानां। ७ क. -ष्टम्। ८ क. कि किं।

जीवितं मरणं [1]नृणां, गमनागमनं तथा। रोगं योगं धनं क्लेशं, सुखं दुःखं शुभाशुभम् ॥११३॥

पल्लीशः प्राह– तर्हि त्वं कथय–अस्मद्वैरिणोऽशोकचन्द्रनृपस्य कदा मरणं भविष्यति, येनास्मद्देशः सर्वो[2] गृहीतः ?। सिद्धेनोक्तम्–एकान्ते[3] कथयिष्यामि। राज्ञा[4] प्रोक्तम्–त्वं वद। सिद्ध [5]आह–

षट्कर्णो भिद्यते मन्त्र–श्चतुष्कर्णो न भिद्यते। [6]द्विकर्णः स्थीयते मन्त्रो ब्रह्माऽप्यन्तं न गच्छति ॥११४॥

ततो नृपकर्णे प्रविश्य तेनोक्तं नृपमरणस्वरूपम्। नात्र सन्देहः। ततो राज्ञा प्रकटमेव स पृष्टः—तत्पदे कः पुत्र उपवेक्ष्यति ? तेनोक्तं क्षणमेकं ध्यानं कृत्वा–राजपुत्राणां राज्यं न भविष्यति, अस्य गोत्रेऽपि राज्यमतः परं न भविष्यति। किन्तु यस्त्वया पुण्याधिकः[7] खो(षो ड्के क्षिप्तोऽस्ति, तस्यैव राज्यं देवतादत्तं भविष्यति। नृपः प्राह–हे सिद्ध[8]! किमसम्बद्धं भाषसे, ज्ञातं तव ज्ञानम्—एतस्य राज्यकथनेन। एष निर्धनो वणिक्, अस्य नामापि [9]न ज्ञायते, यस्य पुण्यं स्यात्, तस्य नाम सर्वत्र ज्ञायते। उक्तं च—

विश्वेऽपि ज्ञायते नाम केषां पुण्यवतां स्फुटम्। नल–पाण्डव–रामाणां केषां गेहेऽपि नो भवेत् ॥११५॥

सिद्धः प्राह–[10]अत्र सन्देहो न कार्यः। चेद् न मन्यसे, तदा प्रत्ययं वदामि–कल्ये यत् त्वया भुक्तं तत्

---

१ क चापि। २ क सर्वोऽपि। ३ क. –न्तेन। ४ क राजा प्राह अत्र सर्वेऽपि आत्मीया एव सन्ति, त्वं कथय। ५ क. प्राह। ६ क. द्विकर्णस्य तु मन्त्रस्य। ७ क प्रियङ्कर। ८ क पुरुष! ९ क कोऽपि न जानाति। १० क राज्यमस्यैव भविष्यति।

कथयामि। राजाऽऽह–त्वं वद। ततः स प्राह—

मोक्षकाः मण्डकाः पञ्च घृत-खण्डा-विमिश्रिताः। मुद्ग-माषवटी चैव तक्र ताम्बूलकं तथा ॥११६॥

एषः श्लोकः पठितः। राज्ञा मानितम्। केनचित् किंचित् सभामध्ये प्रोक्तम्–चूडामणिका गतवार्त्तां जानन्ति, न पुनरागामिकीम्। भूयो भूपेन पृष्टम्–अहमद्य किं भोजनं करिष्यामि? सिद्धेनोक्तम्–मुद्गपानीयम्, तदपि सन्ध्यायाम्। राज्ञोक्तम्–इदमप्यसत्यम्[1]। मम शरीरे [2]भृशमारोग्यं वर्त्तते, ज्वरादि किमपि नास्ति–अथवाऽधुनैव सर्वं ज्ञास्यते। सभालोकस्य विस्मयो जातः। सिद्ध आह–यदि स्वामिन्! तत् सत्यं मिलति, तदाऽनेनाभिज्ञानेनाऽस्य प्रियङ्करस्य राज्यं भविष्यति–इति ज्ञेयम्। नृपः प्राह–तत् कस्मिन् दिने? सिद्धः प्राह—

माघमासे सिते पक्षे पूर्णायां गुरुवासरे। पुष्ये प्रियङ्करो राजा भविष्यति न संशयः ॥११७॥

राज्ञा–तत्क्षणात् प्रियङ्करो मोचितः, स्वगृहे भोजितः, । सार वस्त्रैः सत्कृतः। यतः—

केक पड[3]-पगि लह लहे के कंचन नीराशि[4]। रायमांन केता लहे के न लहे सावासि ॥११८॥

ततो राज्ञा स्वपार्श्वे स्थापितः[5]। वह्वीं वेलां सिद्धेन सह गोष्ठीं कृत्वा सभा विसर्जिता। राजा गृहमध्ये

---

१ क इदमसत्यम्। २ क तु। ३ ये पादे पतन्ति ते पादपातिन, भाषायाम्–पडपागे। ४ क सि। ५ क 'यत:–सर्वत्र वायसा: कृष्णा: सर्वत्र हरित शुका'। सर्वत्र सुखिना सौख्य दु ख सर्वत्र दु खिनाम्–इत्यधिकम्।

[1]समागतः, दन्तधावनं कृतवान्। ततः स्नानं कृतम्, तावता[2]कस्माच्छिरोऽर्त्तिर्जाता। [3]रसवतीकारकाः कथयन्ति—राजन्! भोजनाय माग उत्सूरो जातोऽस्ति, [4]पादाऽव(व)धार्यताम्। राजा प्राह—भोजनं क्षणान्तरे करिष्यामि, मम शिरो [5]दुःखयमानमस्ति। पुनर्मुखे पित्तेनाऽकस्मात् कल्पको जातः—सनत्कुमारचक्रिवत्[6]। पल्यङ्के ततः सुप्तः, निद्रा समागता। सन्ध्यायामुत्थितः, तथापि तादृग् वपुष्पाटवं नास्ति। मन्त्री तदाकर्ण्य तत्रागतो वक्ति—सर्वथा लङ्घनं न कार्यम्। यतः—

ज्वरेऽपि लङ्घनं नैव कर्तव्यं [7]युक्तिलङ्घनम्। ये [8]गुणा लङ्घने प्रोक्ताः ते गुणा लघुभोजने ॥११९॥

[9]तेन मुद्गपानीयं ग्राह्यम्। यतः—

त्रिदोषशमनं[10] हृद्यं रेचकं गात्रशोधकम्[11]। [12]शुद्धं च नीरसं तिक्तं मुद्गवारि ज्वरापहम् ॥१२०॥

ततो राज्ञा रुचिं विनाऽपि मुद्गपानीयं भेषजवद् गृहीतम्। वैद्येनोपरि शिरोऽर्त्ति-पित्तशमनी गुटिका समर्पिता। यतः—

---

१ क. गता। २ क. अगात्। ३ क. अथ [illegible]। ४ क. भाषाया 'पधारो' इति प. [illegible] श्रूयते, गोऽर्थेन विकारः। ५ क. [illegible]। ६ क. [illegible] ते केऽपि नुज्झन्ति। केऽपि [illegible] न किं केऽपि ये [illegible] सनत्कुमार [illegible] नु यन्तो। केऽपि क्षणपरित्राणि. यत [illegible] तस्य कथितम्॥ ७ क. युक्त-। ८ क. लङ्घने ये गुणा प्रोक्ताः। ९ क. ततो। १० क. शमनं। ११ क. नम। १२ क. शुष्क।

एला तिक्तोष्णलघ्वी स्यात् कफ–वायु–विषप्रणुत् । बस्ति–कण्डूरुजो हन्ति मुख–मस्तकशोधिनी ॥१२१॥

द्वितीयदिने समाधिः सम्पन्नः । राजा सभायामुपविष्टो वक्ति—सिद्धवचन सत्यं जातम् । ततो [1]मन्त्रीश्वर–स्वकुटुम्ब–स्वजनादीनाकार्य्य राजा विचार करोति । एष [2]कुमार आत्मभाग्येन जनैरानीतः । एतस्य राज्यमवश्यं भविष्यति । तेन मत्पुत्री वसुमतीनाम्नी[3] दीयते, यदि कुटुम्बस्य चित्ते आयाति । पश्चादेव आत्मनां [4]सुखकारी स्याद्–आत्मसन्तानिनोऽपि [5]सुखिनः स्युः । ततः सर्वैरप्युक्तम्–युक्तियुक्तमिदं वचनम् । ततः पल्लीशेन शुभवेलायां तस्याऽनिच्छतोऽपि कन्यायाः पाणिग्रहणं कारितम् । धन–[6]तुरग–वस्त्रादि दत्तम् । आवासे स्थितः प्रियासहितश्चिन्तयति—एप सर्वोऽपि [7]उपसर्गहरस्तवमहिमा । यतः—

सम्पदो विपदः स्थाने खो(षो)डकेऽत्र [8]विवाहकः । अपमानपदे मान सर्व पुण्यफल त्विदम् ॥१२२॥

ततः प्रियङ्करः सपत्नीको वैरिभयाद् रात्रौ स्वसेवकैः सह श्रीअशोकपुरे पञ्चम्यां राज्ञा प्रापितः । पित्रोः प्रणामं कृतवान् । [9]कुमारं सवधूकं दृष्ट्वा पितरौ हृष्टौ । देववचः सत्यमभूत्[10] । कुमारस्य वसुमती प्रथमा प्रिया जाता । [11]कुमारः प्रियङ्करः सर्वव्यवसायचतुरः कुटुम्बभारं निर्वाहयामास । पिता तु पुण्यान्येव करोति विनीत-



१ क–न्त्रि– । २ क कुमर । ३ क कन्या । ४ क-ष– । ५ क–प्रि– । ६ क–तुरगम– । ७ क–स्तवन - । ८ क पाणिग्रहण च खोडके । ९ क कुमर । १० क जातम् । ११ क कुमर ।

पुत्रप्रसादात् । यतः—

ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः । तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥१२३॥

अन्यदा प्रियङ्करः श्रीदेवगुरुस्मरण- नमस्कारो–पसर्गहर[1]गुणनादि विशेषध्यानं कृत्वा सुप्तः । तदा रात्रौ निशीथात्परतो[2] महाश्चर्यकारकं स्वप्नं लब्धवान् । जागरितो नमस्कारानेव [3]गुणयति । यतः—

[4]जिणसासणस्स सारो चउदसपुव्वाण जो समुद्धारो । जस्स [5]मणे नवकारो संसारो तस्स किं कुणइ ? ॥१२३॥

[6]एसो मंगलनिलओ दुहविलओ सयलसंतिजणओ य । नवकारपरममतो चिंतिअमित्तो सुहं देइ[7] ॥१२४॥

प्राग्वृद्धमुखात् श्रुतम्–'स्वप्नं प्रेक्ष्य निद्रा न कार्या' । उक्तं [8]च—

सुस्वप्नं प्रेक्ष्य न स्वप्यं कथ्यमन्हि च सद्गुरोः । दुःस्वप्नं पुनरालोक्य कार्यः प्रोक्तविपर्ययः ॥१२५॥

प्रातः स्वपितुरग्रे स्वप्नोपलाभस्वरूपं प्रोवाच—यथा, मया स्वशरीरादन्त्रजालं [9]कृष्ट्वा पृथक्पृथक्कृतैः स्वैरन्त्रैर-शोकनगरं शनैः शनैर्वेष्टितम् । ततश्च [10]शरीरं वैश्वानरे जाज्वल्यमानं [11]दृष्ट्वा यावज्जलेनोपशामयति तावज्जागरितः ।

१ क–स्तवन–गु– । २ क. पुरतो । ३ क गणयति । ४ जिनशासनस्य सार चतुर्दशपूर्वाणा य समुद्धार । यस्य मनसि नमस्कार ससारस्तस्य किं करोति ? ॥ ५ क हिए (हृदये) ६ एष मङ्गलनिलयो दु खविलय सकलशान्तिजनकश्च । नमस्कारपरममन्त्र चिन्तितमात्र सुख ददाति ॥ ७ क–पुस्तके समधिकमेवम्—नमस्कारसमो मन्त्र शत्रुजयसमो गिरि । गजेन्द्रपदज नीर निर्द्वद्व जगतीतले ॥ ८ क विवेकविलासे– । ९ क दृष्ट्वा । १० क स्वशरीरं । ११ क दृष्ट ।

वस्त्रा-ऽलंकृति-मद्य-मांस-कुसुम-स्वर्णादिमन्मानवा, [1]गोमी ना दधि-दर्प्पणाग्रविमलाः श्रेष्ठाः कृता दक्षिणे ।१३१।

तदाकर्ण्य कुमारः प्रमुदितः । शकुनग्रन्थिं बद्ध्वा तत्सार्थेन तद्गृहे गतः । ततो वहुमानं दत्त्वा पण्डितः स्वपुत्रीं सोमवतीं तस्मै दत्तवान् । कुमारः प्राह-अहं न जाने तद्वार्त्तामपि, मत्पिता एव जानाति । स्वप्नस्वरूप-पृच्छायां कन्याप्रदानम्-तत्किम्-अन्यत् पृच्छ्यते अन्यदुत्तरदानम्-लवणमार्गणे कर्पूरार्पणमिव, घृतमार्गणे पट्टकूलकर्षणमिव त्वं कुर्वाणोऽसि । पण्डितः प्रोचे[2]-त्वं [3]स्वगृहे गच्छ । त्वत्पितुरग्रे कथयिष्यामि, अपक्वाग्रे वार्त्ता न कथ्यते । येन [4]तद् हृदये न तिष्ठति । ततः [5]स स्वगृहे गतः, [6]पितुः स्वरूपं कथयामास । तत्पिता तत्र गत्वा पण्डितं प्रत्यूचे-[7]स्वप्नविचार[8]स्वरूपं कस्मान्नोक्तम् ? पण्डित ऊचे-अनेन स्वप्नेन ज्ञायते-[9]अस्य नगरस्यैव राजा भविष्यति । यत उक्तं 'स्वप्नशास्त्रे'—

" अन्त्रैश्च वेष्टयेद्यस्तु ग्रामं नगरमेव च । सो ग्रामे (सङ्ग्रामे) नगरे देशे मण्डले पार्थिवो [10]भवेत् ॥१३२॥

आसने शयने [11]याने शरीरे वाहने गृहे । दह्यमाने [12]विबुद्ध्येत तस्य श्रीः सर्वतोमुखी ॥ १३३ ॥

समधातोः प्रशान्तस्य धार्मिकस्यातिनीरुजः[13] । स्यातां पुंसो जिताक्षस्य स्वप्नौ सत्यौ शुभाशुभौ ॥१३४॥

१ गोमी ना-गोयुत पुरुष । २ क प्राह । ३ क गृहे । ४ क. तस्य हृदये वार्ता न तिष्ठति । ५ क नास्त्येतत् । ६ क. पितुरग्रे । ७ क हे विद्वन् ! । ८ क नास्ति । ९ क एष । १० क -ऽभवत् । ११ क चापि । १२ क. विबुध्यते । १३ क. -नि ।

[1]रात्रेश्चतुर्षु यामेषु दृष्टः स्वप्नः फलप्रदः। मासैर्द्वादशभिः षड्भिः त्रिभिरेकेन च क्रमात् ॥१३५॥

तच्छ्रुत्वा 'देवतावागपि सत्या' इति हृदि ज्ञात्वा पासदत्तश्रेष्ठी हृष्टः। पण्डितः प्राह–मदुक्तं[2] सर्वं सत्यम्, सर्वज्ञोक्तशास्त्रस्य प्रामाण्यात्। पुनः पण्डित ऊचे–तेनैव [3]मया त्वत्पुत्रस्य पुत्री दीयमानाऽस्ति। श्रेष्ठिना मानितम्। शुभलग्नं विलोक्य श्रेष्ठिना स्वपुत्रः पण्डितपुत्र्या सह महामहोत्सवेन पाणिग्रहणं कारितः। धन–स्वर्णादि दत्त्वा, हस्तमोचनादि कृत्वा स्वावासे सप्रियः प्राप्तः। जैनब्राह्मणपुत्री सोमवती द्वितीया प्रिया जाता। अन्यदा तद्गृहासन्ने प्रातिवेश्मिको धनदत्त[4]व्यवहारी कोटिस्वामी वसति–दाने, माने, चातुर्यौदार्येषु, बुद्धौ प्रथमः,[5] तस्य कीर्त्ति–[6]गुणाश्च सर्वेऽपि सन्ति। तस्य धनश्रीर्भार्या। जिनदास–सोमदासनामानौ पुत्रौ। पुत्रिकाश्चतस्रः सन्ति। धनदत्तेन नव्यावासकरणाय मुहूर्त्तं गृहीतम्। प्रथमं शुभदिने भूमिं[7] शुद्धां विधायाऽऽवासः कारयितुमारब्धः वास्तुयुक्तः। यथा—

दुःखं [8]च देवताऽऽसन्ने गृहहानिश्चतुष्पथे। धूर्त्ताऽमात्यगृहाभ्यासे स्यातां सुत–धनक्षयौ ॥१३६॥

---

१ क रात्रौ। २ क. त्वदुक्त। ३ क कारणेन। ४ क नामा। ५ क अविकमिदम्–यशस्वी, मनस्वी। ६ क –णाश्च सर्वोऽपि वाक्ति, यत–दानेन वर्धते कीर्ति, लक्ष्मी पुण्येन वर्धते। विनयेन पुनर्विद्या गुणा सर्वे विवेकत। ७ क भूमिशुद्धि। ८ क देवकुलासन्ने।

लक्ष्मीकरः[1] क्षीरवृक्षः कण्टकी शत्रुभीप्रदः। अपत्यघ्नः फलं तस्मादस्य[2] काष्ठमपि त्यजेत् ॥१३७॥
मूर्खा-ऽधार्मिक-पाखण्डि(षडि)-[3]पतितानां च रोगिणाम्। [4]क्रोधिनं त्यज दृप्तानां प्रातिवेशिमकतां त्यजेत् ॥१३८॥
प्रथमा-ऽन्त्ययामवर्जं द्वित्रिप्रहरसम्भवात्। छाया वृक्ष-ध्वजादीनां सदा दुःखप्रदायिनो ॥१३९॥

कियद्भिर्दिनैरावासो निष्पन्नः। वर्यमुहूर्ते गृहमध्ये वामभागे श्रीदेवालयं संस्थाप्य, देवपूजां विधाय, श्रीसंघवात्सल्यदीनोद्धारं[5] कृत्वा च धनदत्तः सपरिवारः [6]स्वनव्यावासे वासं चकार। दिनत्रयं जातम्। चतुर्थ-दिवसे रात्रौ धनदत्तो गृहमध्ये सुखेन सुप्तः, प्रातः प्रबुद्धः, आत्मानमङ्गणे पल्यङ्के सुप्तं पश्यति। आकाश तारकैः पुष्पितं च दृष्टम्। धनदत्तः [7]सविस्मयं प्राप्तः। द्वितीयदिनेऽपि नमस्कारेष्टदेवस्मरणपूर्वकमपवरके कपाटद्वयं दत्वा सुप्तः। प्रातस्तथैव स्वं बहिः [8]पश्यति। चिन्तातुरः सञ्जातः। तृतीयदिनेऽपि [9]कपाटं उद्घाट्य सुप्तः, तथैव जातम् भृशं मनसि खिन्नः। यः [10]कोऽपरोऽपि कुटुम्बमध्ये तत्र स्वपिति, सोऽप्यङ्गणे प्रातर्दृश्यते। ते सर्वेऽपि भीताः। आवासमध्ये कोऽपि न स्वपिति। धनदत्तेन ज्ञातम्-एष आवासो दुष्टव्यन्तराधिष्ठितो जातः। मन्त्रविदोऽनेके पृष्टाः। सर्वेऽपि मन्त्रोपचारं च[?] कुर्वन्ति, तदा विशेषतो व्यन्तरः कुपितः। आवासमध्ये [11]गतानां मनुष्याणां

१ क लक्ष्मीनाशकर। २ क एषा। ३ क. पतव (?) रत्नुगेगिणे। ४ क क्रोधिना। ५ क रादि। ६ क नवीनावासे। ७ क विस्मित।
८ क दर्शयामास। ९ क धूपोद्ग्राह विधाय। १० क कोऽपि। ११ क. गत्वा मुत्रपटिं भमुक्ति (?)

शरीरं भनक्ति, पुरुषस्त्रीणां परस्परं वेषपरावर्त्तं करोति। तदा धनदत्तेनाऽचिन्ति—लक्षधनव्ययोऽस्मिन्नावासे कृतः, स मुधा गतः। धनदत्तश्चिन्तातुरो बहिर्द्वारे [1]उट्टलके उपविष्टः, प्रियङ्करेण दृष्टः, श्यामसुखत्वात् पृष्टश्च। श्रेष्ठिना प्रोक्तम्—

[2]चिंता दहइ सरीरं रोगुप्पत्ती य चित्तविब्भमो। चिंताए दुब्बलत्तं [3]सुहाणं होइ निण्णासो ॥१४०॥

कुमारेणोक्तम्—किं चिन्तया? यतः—

[4]जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोअस्स। इति जाणिऊण धीरा विहुरे वि न कायरा हुंति ॥१४१॥

तथाऽपि चिन्तां त्वं कथय। तेन स्वगृहस्वरूपं प्रोक्तम्। कमप्युपायं यदि वेत्सि तदा कुरु। त्वं धर्मवानसि, परोपकार्यसि, यतः—

[5]विरला जाणंति गुणा विरला पालन्ति निद्धणे नेहं। विरला परकज्जकरा परदुक्खे दुक्खिया विरला ॥१४२॥

प्रियङ्करः प्राह—अत्रोपायकरणे दिनाष्टकं लगति, अधुना [6]तु मम[7] कार्यमस्ति। इभ्य आह—उत्तमाः[8]

---

१ क भाषायाम्—ओटले। २ चिन्ता दहति शरीरं रोगोत्पत्तिश्च चित्तविभ्रमः, चिन्तया दुर्बलत्वं सुखानां (शुभानां) भवति निर्णाशः। ३ क निद्दानासो अब्भुक्खा य (निद्रानाश—अबुभुक्षा च)। ४ यदेव विधिना लिखितं तदेव परिणमति सकललोकस्य। इति ज्ञात्वा धीरा विधुरेऽपि न कातरा भवन्ति॥ ५ विरला जानन्ति गुणान् विरलाः पालयन्ति निर्धने स्नेहम्। विरलाः परकार्यकराः परदुःखे दुःखिता विरलाः॥ ६ क. न। ७ क स्व—। ८ क. —स्तु।

स्वकार्यं मुक्त्वा परकार्यं [1]कुर्वन्ति, यतः—

"हुंति[2] परकज्जनिरया निअकज्जपरम्मुहा सया सुअणा। चंदो धवलेइ महिं न कलंकं अत्तणो फुसइ, ॥१४३॥

तथा च नैषधे—

"याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य। तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः" ॥१४४॥

ततस्तेन कुमारेण मानितम्। चिन्ता न कार्या। ततश्चैत्राष्टाह्निकायां कुमारो नव्यावासे श्रीपार्श्वनाथप्रतिमां [3]मन्त्रयित्वा, तां पूजयित्वा, [4]प्रदीपं कृत्वा, पुरतो [5]भोग्यं [6]कुर्वन् उपसर्गहरस्तव[7]गुणनं प्रतिदिनं मौनेन पञ्चशतीवारं करोति। अष्टमे दिने व्यन्तरो बालकरूपेण ध्यानभङ्गाय [8]समागतः कथयति—मां सीदन्तं रक्ष रक्ष—त्वं कृपावानसि। दशाङ्गुलीर्मुखे क्षिपति तथापि न जल्पति। पुनः स युवा जातः, वक्ति च—एनं बद्ध्वा 'समुद्रे [9]क्षेपयामि' इत्युत्पाटितः। स प्रियङ्करो ध्यानान्नैव चचाल। ततः स एव वृद्धरूपो जातः, शतहस्तप्रमाणः, पलितशीर्षकूर्चो वदति—अहं नन्दीश्वरे यात्रां कर्तुं गच्छन्नस्मि, त्वमपि सार्थे समागच्छ, यथा यात्रां कारयामि। कुमारो दध्यौ—देवानां पलितानि न स्युः, मानवानां तत्र गमने सान्निध्यं विना शक्तिर्न स्यात्, स एव दुष्टव्य-

१ क 'करोति' न शुद्धमिदम्। २ भवन्ति परकार्यनिरता निजकार्यपराङ्मुखा सदा सुजना। चन्द्रो धवलयति महीं न कलङ्कमात्मनः स्पृशति ॥ ३ क मण्डयित्वा। ४ क दीप। ५ क. भोग। ६ क कृत्वा। ७ क —न—। ८ क आगत। ९ क. क्षिपामि।

जलदो भास्करो वृक्षो, दातारो धर्मदेशकाः। एतेषामुपकाराणां नास्ति सीमा महीतले ॥१४७॥

स्नेहोऽपि सहेतुकः स्यात्। उक्तं च—

प्रीतिर्जन्म-निवासतोऽप्युपकृतेः सम्बन्धतो लिप्सया, विन्ध्ये हस्तिवदम्बुजे मधुपवच्चन्द्रे पयोराशिवत्।
अब्दे चातकवद् भवेदसुमतां सर्वत्र नैमित्तिकी या [1]निष्कारणबन्धुरा शिखिवदम्भोदे क्वचित् [2]दृश्यते ॥१४८॥

[3]तव निर्निमित्तकः रात्रौपरि वर्तते। तेन किमपि कार्यं त्वत्सदृशं कथयामि। कुमारः प्राह—मन्त्रिन्! तव सेवकोऽस्मि, कार्यं कथनीयम्। ततो मन्त्रिणा स्वपुत्रीस्वरूपं निवेदितम्। यथा एकस्मिन् दिने मत्पुत्री सखीयुता वाटिकायां क्रीडार्थं गताऽभूत्। तत्र कया शाकिन्या गृहीता, न ज्ञायते डाकिन्या वा, भूत-प्रेत-दोषेण, व्यन्तरदोषेण वा, यक्ष-राक्षस-दोषेण वा वर्षमेकं साधिकं जातम्। उपचाराः[4] कृताः, [5]गुणो न स्यात्-दुर्जने सद्वाक्यवत्। [6]बहुमानितानि, [7]बहुनैवेद्यानि कृतानि, बह्वो वैद्यादयः पृष्टाः। परं केचिद्रोगं वदन्ति, केचिद् भूतादिदोषम्, केचिद् ग्रहादिपीडां च। उक्तं च—

वैद्या वदन्ति कफ-पित्तमरुत्प्रकोपं[8], ज्योतिर्विदो ग्रहकृतं प्रवदन्ति दोषम्।
भूतोपसर्गमथ मन्त्रविदो वदन्ति, कर्मैव शुद्धमतयो यतयो वदन्ति ॥१४९॥

---

१ एतत् पद्यं क-पुस्तके एव। २ एतद् दृश्यते शोधकेन कल्पितम् पुस्तके तदभावात्। ३ क तवाऽनैमित्तिक स्नेह-। ४ क बहव। ५ क पर। ६ क बहूनि। ७ क बहूनि औषधानि। ८ क विकार।

न्तरी समागतः। आशीर्वचो[1] दत्त्वोपविष्टः। प्रियङ्करः प्राह–अहो! ब्राह्मण! किमर्थमत्रागतोऽसि? स प्राह–हे सत्पुरुष!। त्वत्सदृशं कार्यं किमपि वर्त्तते। कुमार ऊचे–तर्हि त्वं कथय, यदि सेत्स्यति तदा करिष्यामि। द्विजः प्राह–प्रार्थनां[2] तदा करोमि, यदि प्रार्थनाभङ्गं न करोषि। यतः—

"परपत्थणापवन्नं[3] मा जणणि! जणसु[4] एरिसं पुत्तं। मा उअरे वि धरिज्जसु पत्थण[5]भंगो कओ जेण[6]" ॥१५२॥

पुनस्त्वं परोपकारी श्रुतः। सतां परोपकार एव सारः[7]। परोपकारः धर्मतरोर्वीजम्–इत्यादि वहूक्त्वा द्विजेन स्वकार्यं तस्याग्रे प्रोक्तम्—अहो उत्तम! शृणु–सिंहलद्वीपे सिंहलेश्वरो राजा, तेन यागो मण्डितोऽस्ति। तत्रोद्यापने सर्वेषां द्विजानां लक्षमूल्यं हस्तिनां दान दास्यति। तेन तत्र यास्यामि[8]। [9]त्वत्पार्श्वे स्वप्रियामोचनायाऽऽगतोऽस्मि। यावदहं तत्कार्यं कृत्वाऽत्राऽऽगच्छामि, तावत् त्वं मत्प्रियां रूपलावण्यवतीं स्वगृहे स्थापय–जलानयन–रन्धन–दधिवि[10]लोडना-

---

१ क आशीर्वचनानि। २ क. प्रार्थित। ३ क पवण (प्रवण।) ४ क. जणेसु। ५ क पत्थिअ–। ६ परप्रार्थना–प्रपन्न मा जननि! जनय ईदृश पुत्रम्। मा उदरेऽपि धर पार्थनाभङ्ग कृतो येन॥ ७ क–पुस्तके इद पद्यम्–यत –"क्षेत्र रक्षति चञ्चा सैव लोलोत्पटी क्वणाद् रक्षेत्। दन्तास्तु (दन्तात्तृण ?) नरप्राणान् नरेण कि निरुपकारेण ?"। ८ क अधिकमिदम्–यत –"कि कि न कय को को न पत्थिओ कह कह न नामिअ सीस ?। दुब्भरउअरस्स कए किं न वय किं न कायव्व ?। कि कि न कृत क क न प्रार्थित कुत्र कुत्र न नामित शीर्षम् ?। दुर्भर–उदरस्य कृते किं न कृत किं न कर्तव्यम् ?। ९ क तेन। १० क. –विलोना–।

दीनि कार्याणि कारयितव्यानि, भोजनं देयम्। तादृग्विधस्वजनाभावादन्यत्र विश्वासो[1] नहि, तदुत्तमस्य तत्र पार्श्वे मुक्त्वा मम गमने निश्चिन्तता स्यात्। कुमारः प्राह—अत्र स्वगोत्रीयान् स्वजातीयान्[2] भलाप्य कस्मान्न मुञ्चसे?। द्विज [3]आह—मम मनः क्वापि न मनुते[4]। उत्तमस्त्रिय उत्तमगृहे एव स्थाप्याः। तेनेदं मत्कार्यं कुरु। कुमारः प्राह—मनो विनाऽपि तव बहुकथनेन परोपकाराय स्थाप्यमानाऽस्ति। कार्यं कृत्वा शीघ्रमत्रागच्छेः[5]। द्विजो हृष्टः पुनरूचे—[6]काश्मीरवास्तव्यः, काश्यपगोत्रम्, कामदेवपिता, कामलदेमाता, केशवनामाऽहम्, करपत्रकहस्तः[7], काषायिकवस्त्रः, इति सप्तभिः ककारैर्योऽभिज्ञानानि पूरयति, तस्यैषा स्त्री अर्पणीया, इत्युक्त्वा विप्रश्चलितः। कुमारेणाऽऽशीर्वचनमुक्तम्

तव वर्त्मनि वर्त्ततां[8] शिवं, पुनरस्तु त्वरितं समागमः। अयि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ॥१५३॥

[9]यदा त्वमागमिष्यसि स्वयं तदैवाऽर्पयिष्यामि—इति निश्चयः कृतः। दिनत्रये जाते तद्रूपः, तद्वयाः, तद्वर्णः, तन्नामा, तत्ककाराद्यभिज्ञानपूरकः तद्वचनः, तादृग्लोलनयनः, तादृग्मुखो विप्रः समागतः। कुमारेण वादितः स—त्वं शीघ्रमेव कस्मादागतः? तत्र कस्मान्न गतः? स आह—स्वजनैर्वारितः[10]। शकुनाभावस्तु जातः। समुद्र-

---

१ क विश्वासानर्हत्वात्। २ क. स्ववर्गीयान्। ३ क. प्राह। ४ क मन्यते। ५ क —मागच्छेः। ६ क कशीवास्तव्य। ७ क —त्रिका-हस्ते। ८ क वर्ततात्। ९ क नास्त्येतत् १० क विहगा (अ) भव्याश्च जाता, अधिकम्।

मध्ये प्रवहणगमनेन, ब्रुडनभयेन च जीवितसंशयः स्यात्, तेन धनेनोपार्जितेनापि किं फलम्। उक्तं च—

"शत्रूणां प्रणिपातेन धर्मस्यातिक्रमेण वै। अतिक्लेशेन ये अर्था–स्ते अर्था मा भवन्तु मे ॥१५४॥

हे कुमार! परदुःखकातरत्वेन तत्र न गतः। अत्र युष्मादृशा भाग्यवन्तः सन्ति, तदाधारेण स्थास्यामि–
इत्युक्त्वा स्त्रियं गृहीत्वा गतः। ततः कियद्भिर्मासैः स ब्राह्मणो निजप्रियामिलनोत्कः[1] सप्तगजप्रमाणं महाकायं पर्वतप्रायं गजेन्द्रं सिंहलद्वीपाल्लात्वा प्रियङ्करगृहे प्रध्वरः[2] समागतः। कुमारस्याशिषं दत्त्वोपविष्टः। अहो कुमार[3]! परोपकारकर! त्वत्प्रसादात् गजादिधनमुपार्ज्य क्षेमेणागतः। अद्यतनदिनाद् यज्जीव्यते स तव प्रसादः। [4]मम शिरसि तव भारश्चटितः[5]। कथमथ प्रत्युपकारं करिष्यामि?। [6]अथवा तवैतत् पुण्यं भवतु। 'अथ मम पत्नीं समर्पय'
इति श्रुत्वा वज्राहत इव कुमारः प्रोचे–त्वमेव प्राग् गृहीत्वा गतः, पुनः किं मार्गयसि? सप्ताभिज्ञानानि त्वया पूरितानि। अथ किं झगटकं[7] कुरुषे। ज्ञातं ज्ञातम्–द्विजा एवंविधा एव दाम्भिका [8]धूर्ता भवन्ति। द्विजः प्राह–
[9]कुमार! यथा तथा मा वद! दाम्भिका वणिज एव स्युः[10]। यतः—

"त्रिदशा अपि वञ्च्यन्ते दाम्भिकैः किं पुनर्नराः। देवी यक्षश्च वणिजा लीलया वञ्चितावुभौ" ॥१५५॥

---

१ क –त्सुक। २ क प्राध्वर। ३ क. कुमर!। ४ क नास्ति। ५ क चटित। ६ क नास्ति एतत् वाक्यम्। ७ भाषायाम्–झगडो–क्लेश।
८ क नास्ति। ९ क कुमर!। १० क भवन्ति।

धर्मनिन्दी पङ्क्तिभेदी निद्राच्छेदी[1] कलेः करः। तत्पापं मेऽस्तु चेत् त्वत्स्त्री मयाऽपलपिता भवेत् ॥१५९॥
स्वस्त्रियं ये परित्यज्याऽन्यत्र कुर्वन्ति ये रतिम्। तत्पापं मेऽस्तु चेत् त्वत्स्त्री मयाऽलपिता भवेत् ॥१६०॥
कलत्रद्वितये स्नेह–विभागं येऽत्र कुर्वते। तत्पापं मेऽस्तु चेत् त्वत्स्त्री मयाऽपलपिता भवेत् ॥१६१॥
कूटसाक्षी परद्रोही पितृद्वेषी कुबुद्धिदः। तत्पापं मेऽस्तु चेत् त्वत्स्त्री मयाऽपलपिता भवेत् ॥१६२॥

द्विजः [2]प्राह–क्रूरकर्मणां शपथान् न मन्ये[3]। कुमारो[4] वक्ति–तर्हि सर्वं धनं गृहाण। विप्र[5] आह–अपरं [6]किमपि न गृह्णामि, मदीयं वस्तु समर्पय। कुमारो वदति–कूटकलङ्के सर्वथाऽहं प्राणान् त्यक्ष्ये–इत्युक्त्वा खड्गे हस्तं क्षिपति। तावता विप्रेणोक्तम्–साहसं मा कुरु। चेद्यत्कथित[7] करोषि तदा स्त्रियं न मार्गयामि। कुमारो हृष्टः प्राह–यत्किञ्चित्कथयिष्यसि, तत्सर्वं करिष्यामि, एते[8] साक्षिणः। कुमारेण प्रोक्तम्–गृहं त्यक्त्वा देशान्तरे यामि, उत द्वादश वर्षाणि वने तिष्ठामि, किमु पृथिवीं भ्रमामि? अथवा यावज्जीवं तव दासो भवामि। द्विजः प्राह–अलं च विस्तरेण। त्वया सर्वं कथितमस्ति तत्सर्वं कार्यं कुरु। तत्रापि धूर्त्तेन वाचा छलितः, यदा कर्म न स्यात् तदा प्राध्वरं[9] वक्रं स्यात्। स कुमारो विप्रपादयोर्लग्नः। ततस्तेनोक्तम्–विमृश्य प्रोच्यते, अमृष्टक-

१ क. पक्षपाती झगटके। २ क. आह। ३ क मन्यते। ४ क. कुमरो। ५ क स। ६ क. धन। ७ क मत्कथित। ८ क साक्षिण के? तेनोक्तम्–पश्च। तस्मात् सद्भिर्यद्वचनम्–उक्तम्, तदुक्तमेव अस्ति देववत्। ९ भाषायाम्–पावरु।

थितं प्रत्युतानर्थाय स्यात्। कुमारेण सत्यं मानितम्। अथ ममैकमेव कार्यं [1]'कुरुध्वम्—यदि मन्त्रिपुत्र्याः प्रतीकारोपायं न करिष्यसि, तदाकर्ण्योपचारं न करिष्यामि इति विप्रेणोक्तम्। कुमारः प्राह—प्रतिज्ञातं न मुञ्चामि। द्विज आह—अस्या निर्गुणायाः कटुकजिह्वाया आदरः सतां न युक्तः। कुमारः प्राह—सद्भिर्यद्वचनमुक्तं तदुक्तमेव हस्तिदन्तवत्। यत आह—

"[2]गुरुआ न गणंति गुणे पडिवन्नं निग्गुणं पि पालंति। अहला सहला वि तरू गिरिणा सीसेण वुज्झंति" ॥१६३॥

"दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि।
चन्द्रस्तथापि हरवल्लभतां प्रयाति नह्याश्रितेषु महतां गुणदोषचिन्ता" ॥१६४॥

"अद्यापि नोज्झति हरः किल कालकूटं कूर्मो बिभर्त्ति धरणीं किल चात्मपृष्ठे।
अम्भोनिधिर्वहति दुःसहवाडवाग्नि—मङ्गीकृतं सुकृतिनः परिपालयन्ति" ॥१६५॥

ततस्तेन प्रियङ्करेण पृष्टम्—अस्या अज्ञाया अबलाया बालाया उपरि तव किं वैरं वर्त्तते? येन त्व पीडयसि विद्याबलेन एनामुपक्षयसि। यतः—

"तृणोपरि कुठारः किं मृगे सिंहपराक्रमः। कमलोत्पाटने हस्तो कटकं कीटिकोपरि" ॥१६६॥

---

१ कुरु। २ गुरव न गणयन्ति गुणान् प्रतिपन्न निर्गुणमपि पालयन्ति। अफला. सफला अपि तरव गिरिणा शीर्षेण उह्यन्ते॥

अस्या[1] जिह्वाया गुणेन । उक्तं च—

"यस्य जिह्वा वशे नास्ति तस्य वैरं जगत्त्रये । जिह्वायाममृतं यस्य तस्यात्मीयं जगत्त्रयम्" ॥१६७॥

"जिह्वाग्रे वसति विद्या जिह्वाग्रे मित्र-बान्धवाः । जिह्वाग्रे बन्धनं मोक्षः—जिह्वाग्रे परमं पदम्" ॥१६८॥

कुमार आह—अनया वार्त्तया ज्ञायते-त्वं द्विजो न स्यात्[2], कोऽप्यपरो देवो वा दानवो वा वर्त्तसे । ततो द्विजरूपं मुक्त्वा देवो जातः । गजोऽपि न दृश्यते[3] । [4]कुमारेणोक्तम्—मन्त्रिपुत्र्या[5] तव किं विनाशितम् ? । [6]देवः प्राह—एषा सखीयुता मद्वने समागता । मत्प्रतिमां दृष्ट्वा हसिता । अहं सत्यवादी यक्षो[7] लोकानामाशापूरकः, लोको मां पूजयति । एषा वक्ति—अयं देवो न स्यात्, पाषाणो मण्डितोऽस्ति—इत्यपकृत्य[8] निर्गता । ततो मया निगृहीता । कुमार ऊचे—

"[9]मइ मंडलेण भसिअं हत्थि दट्ठूण रायमग्गम्मि । ता किं गयस्स जुत्तं सुणहेण समं कलिं काउं" ॥१६९॥

"हाथी हालें हेक लख(ष) कूतर गलीए लवें । वडपण तणे विवेक कदि न खी(षी)जे किसनीया ! " ॥१७०॥

---

१ क द्विजः प्राह । २ क नास्ति । ३ क अत्राधिकम्-राजवाटिकाया मम देवकुलमस्ति, तत्र ह यक्षोऽस्मि । ४ क. कुमर आह । ५ क अनया । ६ क नास्ति । ७ क यक्षोऽस्मि । ८ क. नक्र वक्राक्रिय । ९ यदि मण्डलेन भषित हस्तिन दृष्ट्वा राजमार्गे । तस्मात् किं गजस्य युक्त श्वानेव समं कलिं कर्तुम् ।

यद्यपि [1]सिंहस्य पुरतो विरसं रसतीह मतगोमायुः । तदपि न कुप्यति सिंहो [2]विसदृशपुरुषेषु कः कोपः ? ॥१७१॥

तेन तव कोपोऽत्र न [3]विलोक्यते—उत्तमत्वात् । यतः—

यदि काको गजेन्द्रस्य विष्ठां [4]करोति मूर्द्धनि । कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥१७२॥

इत्यादिमधुरवचनैः कुमारेणोपशान्तकोपः सत्कृतः । ततः स आह—तवोपसर्गहरस्तवगुणितेन तच्छरीरे स्थातुं न शक्नोमि । तेन मया तव [5]सत्पुरुषत्वं परीक्षितम् ! यतः—

क्षामत्व-लक्ष्मलक्ष्ययेग गोस्तनी-रजनीशयोः । सारं [6]विभातयोर्हृत्वा कृताः सन्तो जयन्तु ते ॥१७३॥

इत्याशिषं दत्त्वा वक्ति—सन्तुष्टोऽस्मि, वरं वृणु । ततस्तेन वरो मार्गितः—मन्त्रिपुत्रीमेव मुञ्च, [7]सज्जीकुरु । [8]तद्वचनात् तेन मुक्ता, [9]सज्जीकृता । यक्ष आह—परं मन्निन्दया एषा वालिका वहुपुत्र-पुत्रिका भूयादित्युक्त्वा, कुमारस्य सर्वपक्षिणां भाषाज्ञातृत्ववरं दत्त्वा यक्ष. स्वस्थान गतः । [10]ततो मन्त्रिणा यशोमत्या सह प्रियङ्करस्य पाणिग्रहणं [11]कारितम्, धन-धान्य-[12]रत्नादिदान हस्तमोचने कृतम्, सर्वेषां प्रमोदः सम्पन्नः । स सप्रियः स्वसदने

१ क मृगपतिपुरत । २ क. असदृग- । ३ क वर्तते । ४ क कुर्वीत । ५ क साहस । ६ क विरश्चिणा । ७ क. सज्जा । ८ क. ततो । ९ क. सञ्जीभूता । १० क अधिकमेतत्—मन्त्रिणा चिन्तितम्—प्रियङ्करेण महान् उपकार कृत, तेन अस्य एव एषा कन्या दीयते । ११ क. गुणकीर्तन । १२ क. हिरण्य- ।

प्राप्तश्चिन्तयति–एष स्तवमहिमा, यद् यक्षः प्रत्यक्षो जातः। उक्तं च—

उपसर्गहरस्तवनं यच्चित्ते स्फुरति सततमिह। भूत–व्यन्तर–यक्षाः प्रत्यक्षाः स्युर्नृणां तेषाम् ॥१७४॥

स यशोमत्या सह भोगान् भुङ्क्ते क्रमेण, तस्या यक्षकथनात् तथैव जातम्। सा वर्षे वर्षे पुत्र–पुत्री–युग्मं प्रसूते–द्वादशभिर्वर्षैः १२ पुत्राः, १२ पुत्र्यः अस्या जाताः। तेषां पुत्रादीनां लालन–पालन–रक्षण–स्तन्यपान–भोजन-दान–चिन्ताकरणादिना खेद प्राप्ता। तेषां परस्परकलहकारणाद् अविनीतत्वाच्चोद्विग्ना सुखं न शेते, सुखं न भुङ्क्ते। ततश्चित्ते चिन्तितवती–या वन्ध्याः स्त्रियो भवन्ति, तासां जीवितं संयोगसुख–भोजन–शयनादि श्लाघ्यम्। कुर्कुटीवन्मया किं कर्म कृतम्। तेन कस्यापि निन्दा न कार्या। विशेषादेवता–गुरूणाम्। यतः—

[1]परनिन्दामहापापं न भूतं न भविष्यति। आत्मनिन्दासमं पुण्यं न भूतं न भविष्यति ॥१७५॥

[2]जो पव्वय सिरसा भित्तुमिच्छे सुत्तं व सीहं पडिबोहइज्जा।
जो वा दए सत्ति–अग्गे पहारं एसोवमाऽऽसायणया गुरूणं ॥१७६॥

[3]चतुर्थी प्रिया यशोमती जाता। प्रियङ्करः प्रासादे प्रत्यहं देवपूजां करोति। एकदा तत्र श्रीपार्श्वनाथपूजां

१ क–पुस्तकेऽय श्लोक., दुर्गमश्चपाठवैचित्र्यात्–परनिन्दा–महापाप परपापान्यहो यत। अकृत्यान्यपि लिखाति तत्काल जरतीय यथा। २ य पर्वत शिरसा भेत्तुमिच्छेत् सुप्त वा सिंह प्रतिबोधयेत। यो वा दयेत शक्ति–अग्रे प्रहारम्–एषोपमा आशातना–गुरूणाम्। ३ क नास्ति।

कृत्वा चैत्यवन्दनामकरोत्। नमस्कारा उदारा भणिताः। यथा—

कृत्वा चैत्यवन्दनामकरोत्। नमस्कारा उदारा भणिताः। यथा—
स्तौमि दयोद्धृतभुवनं पार्श्वजिनं [1]सुरकृतस्तवनम् ॥१७७॥
कल्याणपादपवनं प्रभावभवनं रजःशमनम्। स्तौमि दयोद्धृतभुवनं पार्श्वजिनं सुपुण्यवताम् ॥१७८॥
उपसर्गहरस्तवनं वनेऽपि [2]स्मृतिपथं नयन्ति यके। अरि–केसरि–करि–शङ्का न स्यात् तेषां सुपुण्यवताम् ॥१७८॥
सश्रीकं वसुधाधारं प्रभूतविषयापहम्। प्रगुणश्रीरुचिं वन्दे मध्याक्षरगुरुस्तुतं ॥१७९॥
जय जय पार्श्वजिनेश्वर! नेश्वर इह कोऽपि तव गुणान् वक्तुं। त्वन्नामसुरमणिसम रमणीयं श्रीदपदकमल! ॥१८०॥

इति स्तुत्वा स्वगृहे समागच्छन् प्रियङ्करो निम्बस्थकाकरुतं श्रुतवान्। तच्छब्दज्ञेन ज्ञातम्। काको मां ब्रूते, यथा—

निम्बवृक्षतलेऽत्रास्ति लक्षद्रव्यं करैस्त्रिभिः। नरोत्तम! गृहाण त्वं भक्ष्यं मम समर्प्पय ॥१८१॥

तेन काकोपविष्टशाखाधस्ताद् भूः खनिता। लोकाः कथयन्ति–[3]किमर्थं खनसि? तेनोक्तम्–गृहपूरणाय–इति सत्यमुक्त्वा तद् द्रव्यं स्वगृहे समानीतम्। काकस्य दधि- कूरकरम्बो दत्तः। व्यवहारिवर्गेषु स विख्यातोऽभूत्[4]। ततो राजा प्रियङ्करगुणोत्कर्षं श्रुत्वा हृष्टः, तमाकार्योक्तवान्–वारद्वयं त्वया सभायामागन्तव्यम्। राज्ञो मानं च जातं स प्राक्कृतपुण्यमहिमा। यतः—

---

१ क सस्तवन। ४ क ते। ३ क कमर्थं खानयति। ४ क जात।

नृपतिबहुमानं भोजनं च प्रधानं भवति [1]धनमगा(?)ं शुद्धपात्रेषु दानम् ।
हय-गज-नरयानं [2]भावतो गीतगानं शमिह सुरसमानं पूर्वपुण्यप्रमाणम् ॥१८२॥

प्रियङ्करस्य [3]सर्वेऽपि मानं [4]ददति । यतः

[5]राजमान्यं धनाढ्यं च विद्यावन्तं तपस्विनम् । रणे शूरं च दातारं कनिष्ठो ज्येष्ठ उच्यते ॥१८३॥

ततः [6]कियद्दिनैररिसूर-रणसूराख्यौ राज्यार्हौ पुत्रावकस्माद्विपन्नौ । राज्ञो महादुःखं जातम् । कस्यापि किमपि चिन्तितं न स्यात् । यतः —

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा[7] हन्त ! हन्त ! नलिनीं गज उज्जहार[8] ॥१८४॥

राजलोकस्यापि चिन्ताऽभूत् । [9]राजा सभायां नोपविशति, मन्त्री प्रबोधयति-शोकेन किं स्यात् ? दैवायत्तस्य वस्तुनः सर्वेषामेष एव मार्गो वर्त्तते । अलं खेदेन । [10]सगरचक्रिणः षष्टिसहस्रपुत्राः, सुलसाश्राविकाया

१ क –ममान । २ क. तीर्थय त्रात्रियान । ३ क. सर्वोऽपि । ४ क. दत्ते । ५ क राज्यमान्य । ६ क –द्वि । ७ क. हा मूलतः कमलिनीं
८ क पुस्तके अधिका गाथा—एय त च तडाग गयघड वुडन्ति जस्स तीरम्मि । एसो विहिपरिणामो मज्झे मच्छा खणिज्जन्ति–एतत् तच्च तटाक गजघटा ब्रुडन्ति यस्य तीरे । एष विधिपरिणामो मध्ये मत्स्या खन्यन्ते ॥ ९ क राजसभाया । १० क यत सगरस्य

यतः—

द्वात्रिंशत्पुत्रास्ते [1]सर्वेऽपि दिवंगताः । [2]तेन शोकः सर्वथा न कार्यः । परिहार्य्येऽर्थे का तत्र परिवेदना ? ॥१८५॥

जातस्य हि ध्रुवं मृत्यु-र्ध्रुवं जन्म मृतस्य च । तस्माच्च

ए संसार असारडो आसा वंधण जाइ । [3]अनेरे किर सूइए अनेरडे विहाय ॥१८६॥

तद्दिनादारभ्य राज्ञः पुत्रमोहाद्वपुरपाटवमस्ति—

अन्नाऽरुचिर्वपुःपीडा नेत्रे निद्रा न विद्यते । नास्ति भूयो मनःस्वास्थ्यं न जाने किं भविष्यति ॥१८७॥

कियद्दिनादनु[4] पाश्चात्यरात्रौ [5]योत्रितखरवाहिन्यामुपविष्टो दक्षिणस्यां दिशि गत—इति स्वप्नं लब्धवान् । मन्त्र्यग्रे रहः कथयामास । ततः स्वप्नज्ञो मन्त्रिणा पृष्टः—मध्यमं स्वप्नमाह । यतः—

खरो-ष्ट्रयोर्हि यानेन याम्यायां दिशि गच्छति । अचिरेणैव कालेन मृतिं तस्य विनिर्दिशेत् ॥१८८॥

इत्याकर्ण्य नृप-मन्त्रिणौ चिन्तातुरौ जातौ । देवस्थानेषु पूजा-भू-गोदानादिकं मेनतुः । दीनोद्धार-सत्राकारादिपुण्यानि चक्रतुः[6] । एकदा राजा[7] सभायामुपविष्टः, सामन्त-श्रेष्ठि-सेनापति-श्रीकरणा-वैरागरणा (?) पुरोहित-पत्तिप्रमुखाः प्रणामार्थमागताः सन्ति । तत्समये राजसभायां प्रियङ्करोऽपि गच्छन्नस्ति, तदा मार्गे देव्यवग्[8]—

१ क. समकाले विपन्ना । २ क तत । ३ अन्यत्र सुप्तम्—अन्यत्र प्रभातम्—इति भाव. कल्प्यते । ४ क राजा । ५ योत्रिता—भाषायाम्—जूतेली । क. योत्रितखराया । ६ क. चक्रु । ७ क. राजसभाया । ८ क. दिव्या वाग् जाता ।

हे कुमार ! राज्ञः सकाशादद्य तव भयं वर्त्तते । पुनः साऽवक्-चौरवत्तव बन्धनं वर्त्तते इति कथयन्त्यस्ति । कुमारः समयं[1] विष्कम्भितः दध्यौ-मयाऽन्यायः कोऽपि कृतो न[2], राज्ञोऽपराद्धं नास्ति, अथवा राज्ञो मनः को[3] वेत्ति ? । यतः—

अग्निरापः स्त्रियो मूर्खाः[4] सर्प-राजकुलानि च । नित्यं यत्नेन सेव्यानि सद्यः प्राणहराणि षट् ॥१८९॥

काके शौचं द्यूतकारेषु सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ? ॥१९०॥

अथवा दुर्जनविलसितं भवति । यतः

[5]तं नत्थि घरं तं नत्थि राउलं देउलं च तं नत्थि । जत्थ अकारणकुविआ दो तिन्नि खला न दीसंति ॥१९१॥
वज्झइ वारि समुद्दह वज्झइ पंजरि सींह जई । बद्धा कुणें कहिउं दुज्जणकेरी जीह ॥१९२॥

मुधा विकल्पेन दोष एव स्यात् । राजैव[6] च्छलान्वेषी किमप्युक्त्वा दण्डयिष्यतीति तत्रापि कोपः व्यर्थः स्यात् । यतः—

[7]दुल्लहजणम्मि पिम्मं खले सुमित्ती (सुमई) जडम्मि उवएसो । कोवो असमत्थजणे निरत्थओ नत्थि संदेहो ॥१९३॥

---

१ क मनसि । २ क नास्ति । ३ क कोऽपि । ४ क -र्खा । ५ तद् नास्ति गृह तद् नास्ति राजकुल देवकुल च तद् नास्ति । यत्र अकारणकुपिता द्वौ त्रय खला न दृश्यन्ते ॥ वध्यते वारि समुद्रस्य बध्यते पञ्जरे सिंहो यदि । बद्धा केन कथिता दुर्जनस्य जिह्वा ॥ ६ क. राजा चेत् ७ दुर्लभजने प्रेम खले सुमैत्री (सुमति) जडे उपदेश । कोपोऽसमर्थजने निरर्थको-नास्ति संदेह ।

यद्भाव्यं तद्भवतु—इति विचिन्त्याग्रे गतः[1]। ततः क्षणमेकं विलम्ब्य राजसभायां गत्वा यावद्राज्ञः प्रणामं
करोति, तावताऽकस्मादेववल्लभहारस्तस्य शीर्षात् पतितः—सभालोकैः, राजलोकैर्दृष्टः। सर्वेषामाश्चर्यमभूत्। यो हारो
गतोऽभूत् स [2]कुमारपार्श्वाल्लब्धः। [3]कुमारश्चकितः। हा! दैवेनासमञ्जसं किं कृतं? चिरकालार्जितं महत्त्वं चोर-
कलङ्केन सर्वं गतम्—मरणं [4]समागतम्। दुर्गोक्तं सत्यं [5]जातम्। पूर्वजन्मनि मया कस्यापि मुधा कलङ्को दत्तोऽभूत्
सीतावत्। तत्कर्म ममाधुना समुपस्थितम्[6]। ततोऽशोकचन्द्रो राजा एनं बद्ध्वा चोरदण्डः कार्य इति स्वतलारं
समादिशत्। मन्त्री प्राह—प्रियङ्करे एषा वार्त्ता न घटते, एषः परोपकारी पुण्यवानेव वर्त्तते। राज्ञा कुमारः पृष्टः—
त्वं सत्यं [7]वद, एष लक्षमूल्यो हारः कुतस्त्वया गृहीतः? कुतो लब्धः? वा केनार्पितः? वा केनापि त्वद्गृहे
स्थापितो वा? सत्यं वद। स आह—स्वामिन्नहं किमपि न जाने—अद्ययावन्मया कदापि दृष्टो नास्ति।
राज्ञां यद्विचारे समायाति, तत्कुर्याः। राजा आह—कीदृग् मिष्टवागस्ति, कीदृग् कलावानस्ति। मन्त्र्याह—एषः

---

१ क पुस्तकेऽधिकमिदम्—तावता उच्चस्थाने स्थिता देवी अवग्—तव राज्य भाविष्याति—इति श्रुत्वा दध्यौ—देव्या अविसवादिवचन साह-समवलम्ब्य राजसभायाम्। २ क. कुमरस्य। ३ क कुमर.। ४ क —मागतम्। ५ क यत —चौर्यपापद्रुमस्येह वध-बन्धादिक फलम्। ज्ञायते परलोके तु फल नरकवेदना॥ ६ क. यत —कर्मि कलङ्क सुदसण सेठि हरिचद कीधी मातग-वेठि। मेतारयरिषि काढी द्रेठे कर्मिं कीधु सहु पग हेठि। ७ क कथय।

श्रावकोऽस्ति, चौरदण्डार्हो नास्ति—इति विमृश्य करणीयम्। यतः—

[1]सहसा विदधीत न क्रिया—मविवेकः परमापदां पदम्। वृणुते हि विमृश्यकारिणं गुणलुब्धा स्वयमेव सम्पदा ॥१९४॥

सगुणमपगुणं वा कुर्वतः कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते—र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥१९५॥

स्वामिन्नस्य विनय एव कुलीनत्वम्, सदाचारत्वं च कथयति। उक्तं च—

हंसा गतिं पिकयुवा कलकूजितानि नृत्यं शिखी परमशौर्यगुणं मृगेन्द्रः।
सौरभ्यशैत्यललितं मलयाद्रिवृक्षाः कैः शिक्षिता विनयकर्म तथा कुलीनाः? ॥१९६॥

राजन्! देवविलसितमिदं ज्ञेयम्। राज्ञोक्तम्—[2]मन्त्रीश्वर! त्वया जामातृत्वादेतस्य पक्षः क्रियमाणोऽस्ति, परं चौरपक्षः कस्यापि न श्रेयस्करः! यतः—

चौरः चौरापको मन्त्री भेदज्ञः क्रयविक्रयी। अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥१९७॥

ततो मन्त्री भीतस्तूष्णीं कृत्वा स्थितः। राज्ञा सेवकानामुक्तम्—एष हारतस्करो दृढं बध्यताम्। ततस्तैस्तदैव बद्धः[3]। मन्त्रिणं राजाह—हारतस्करस्य [4]भूमिदेवनैमित्तिकेन राज्यमुक्तमभूत्, परं मदुक्तं शूलीराज्यं[5] भविष्यति,

१ किरातार्जुनीये भारविवच.। २ क. मन्त्रिन्। ३ क राज्ञोऽग्रे। ४ क भूदेवेन। ५ क शूल्यारोपणमेव।

तदवसरे स्त्रियश्चतस्रो दिव्यरूपा दिव्याभरणा दिव्य-
मद्गोत्रिणश्च राज्यधारकाः वर्त्तन्ते । मन्त्र्याह—स्वामिन्नेवमेव । सभायां तद्रूपेण चमत्कारो जातः । नृपेण पृष्टाः—कुतो
लोचना राजसभायां समागताः । राज्ञा[1] तासां स्वागतं पृष्टम्[2] । किं स्वजनमिलनार्थं वा ? मद्योग्यं कार्यं कथयन्तु—तन्मध्ये
यूयं प्राप्ताः ? केन हेतुनाऽत्रागताः ? किं तीर्थयात्रार्थम् ? प्रियङ्करो नाम व्यवहारिपुत्र ईदृग्वया ईदृग्रूपश्चतुरः,
एका वृद्धा प्राह—राजेन्द्र ! वयं पाडलीपुरात् प्राप्ताः[3] । पूर्वं देवगृहे[4] गत्वा देवा नताः । यतः—
परोपकारपरः, समस्ति—तत्शुद्धिं सम्यगवगम्य वयमत्रागताः ।

[5]आगलि जाताः [6]कोट जेहिं न नामी देवगुरु, माथे वहेसे[7] मोट भोजननो[8] सांसो पडे[9] ॥१९८॥

अत्रागतैरेकोऽस्माभिः पृष्टः—प्रियङ्करः क्व तिष्ठति ? । तेनोक्तम्—अत्र प्रियङ्करः सङ्कटे पतितोऽस्ति—राजमा-
न्योऽपि चौरकलङ्केन सत्येन वा असत्येन वा निगडितोऽस्ति तच्छ्रुत्वा अत्रागताः, अद्यतनं दिनं सफलं जातम् ।
राजेन्द्र ! तव दर्शनात्[10] । ततो राज्ञा प्रियङ्करो मुखाग्रे [11]आनायितः । वृद्धा प्राह—एष मत्पुत्रः, आलिङ्गनं दत्त्वा—

१ क राजा । २ क. पृष्टवान् । ३ क-अधिकमेतत्—एष प्रियकरो मत्पुत्रो गृहाद् रुष्टो गत, सर्वत्र गवेषित, पर न लब्ध, वर्षद्वय जातम् । अधुना अशोकपुरात् अत्राऽऽगतेन केनापि उक्तम्—प्रियङ्करो । ४ क. देव वन्दित्वा । ५ क. आगलि गृहे गता कोटिही जिहि न मानी । ६ भाषायाम्-कोट-डोक । ७ क वहसि । ८ क भोअग सासि सापडइ । ९ क जिनवरकेरइ दरशणि जिहि न नामी कोट । अनत भवतरि जीवडा ते सिरि वहसि मोट ॥ १० क दर्शनेन । ११ क. आनीत. ।

वत्स! केन कारणेन [१]रुष्टः ? [२]चेदरुष्टस्तर्हि कुटुम्बं कथमकस्मादत्रागतम् । द्वितीया आह–एष मद्भ्राता, तयाऽपि
तथैवाऽऽलापनादि कृतम् । तृतीया आह–मम देवरः प्रियङ्करः । चतुर्थी प्राह–एष मम वरः–विहास्यं मुखं वि-
लोक्य स्थिता–लज्जा नम्रमुखी । सभायां सर्वेषां विस्मयो[३] जातः । लोका वदन्ति–प्रियङ्करस्य [४]कपटं प्रकटीभूतम् । यतः–

विद्यादम्भः [५]क्षणं स्थायी ज्ञानदम्भो दिनत्रयम् । रसदम्भस्तु षण्मासान् मौनदम्भो हि दुस्तरः ॥१९९॥

एके कथयन्ति, एतस्य [६]पुंरत्नस्य [७]पुण्यवतश्चौरदोषो लग्नः[८] । तं केचित् प्रशंसन्ति, केचिन्निन्दन्ति, केचित्प-
श्चात्तापं कुर्वन्ति, केचिद्दैवमुपालम्भयन्ति, केचन तं हसन्ति, तथाऽपि स न कुप्यति । यतः—

वावाणा जण [९]बुल्लणा नाह न कीजे रोस। नींके कापड षायणुं चांगे मा माणस दोस (?) ॥२००॥

ततो[१०] वृद्धा प्राह—राजन्नेनं मत्पुत्रं मुञ्च । राजा वक्ति, अनेन मदीयो लक्षमूल्यो हारो गृहीतः, कथं
मुञ्चामि । वृद्धयोक्तम्–दण्डं समर्पयिष्यामि । राज्ञोक्तम्–यदि लक्षत्रयं दास्यसि, तदैवास्य मोक्षः । पुनः [११]साह–
लक्षत्रयं साधिकमपि दास्यामि, परमेतं मुञ्च । राजा प्राह–एतस्य पिता काऽस्ति ? वृद्धा[१२] वक्ति—स्वामिन्नु-

१ क गृहाद् निर्गतः । २ क नास्ति–एतत् । ३ आश्चर्यम् । ४ क पुण्यम् । ५ क. क्षण । ६ क पुत्ररत्नस्य । ७ क. परोपकारिण. ।
८ क–पुस्तके–तु–यत -शशिनि खलु कलङ्क कण्टक पद्मनाले जलधिजलमपेय पण्डिते निर्धनत्वम् । स्वजनजनावियोगो दुर्भगत्व सुरूवे धन
वति कृपणत्व रत्न (सर्व) दोषी कृतान्त ॥ ९ क बोलणा । १० क राजान स्त्रिय प्राह (हु) । ११ क सा प्राह । १२ परमेन मुञ्च ।

चारकेऽस्ति। ततस्तमाकार्य राजा पृष्टवान्–एष प्रियङ्करस्तव किं स्यात्? तेनाप्युक्तम्–मत्पुत्रः–तथैव सर्वं प्रोक्तम्, राज्ञा मानितं च। मन्त्री प्राह—सर्वमप्यसत्यम्। एते धूर्त्ताः सन्ति। कुमारस्य पिता पासदत्तश्रेष्ठी, [1]माता प्रियश्रीनाम्नी विद्यते–तावाकार्य्य प्रष्टव्यौ। राज्ञोक्तम्–तयोरेष पालकपुत्रो भविष्यति, किं पृच्छयते? मन्त्री प्राह–[2]तथाप्याकार्यताम्। ततस्तौ[3] राज्ञा आकारितौ समागतौ प्रणामं चक्रतुः—प्राघूर्णकौ ग्रामस्थाविव पितरावुभावपि समानरूपौ सदृशवचनौ सदृशवयसौ किमिव युग्मिनौ जातौ दृश्येते। राज्ञः, मन्त्रिणः, सभालोकस्य चाश्चर्यं जातम्। राजाऽऽह–मन्त्रिन्! [4]त्वयोक्तं सत्यं जायमानमस्ति, तावन्योन्यं विवदेते पुत्रार्थम्–हे राजन्! न्यायः क्रियताम्, नो चेदन्यराजकुले यास्यामः। राजा मन्त्रिणं प्रत्याह—कापि बुद्धिश्चिन्त्या। स आह–सभायां षोडशगजप्रमाणा समचतुरस्रा शिलाऽस्ति, यत्र सार्थवाहाः प्राभृतं कुर्वन्ति, तां य एकेनैव हस्तेनोत्पाटयिष्यति, स पिता–स पुत्रं गृहीत्वा यातु। ततोऽतिथिपित्रा सा शिला लीलयैकेनैव हस्तेनोत्पाट्य मस्तकोपरि छत्राकारेण धृता, सर्वेषां कौतुकं जातम्। मन्त्र्यूचे–एष न सामान्यः। राजाऽऽह—त्वं पिता न भवसि–दानवो वा, किन्तु देवो वा, त्वं मानुषो न भवसि, विद्याधरो वा। स्त्रियोऽपि मानव्यो न स्युः, किन्तु देवाङ्गनाः, विद्याधर्यो वा–कस्मादस्मान् विप्रतारयसि, स्वरूपं [5]प्रकटीकुरु। ततः स देवो[6] जातः, स्त्रियोऽप्यदृश्यीभूताः। हे राजेन्द्र!

---

१ क. अत्रास्ति २ क. तौ आकार्य पृष्टव्यौ। ३ क नास्ति। ४ क काऽपि बुद्धि क्रियताम् इत्यधिकम्। ५ क प्रगटी–। ६ क देवरूपो।

अहं [1]राज्याधिष्ठायको देवोऽस्मि। तव मरणसमयज्ञापनाय, राज्यार्हपुरुषराज्यस्थापनाय चात्रागतोऽस्मि। त्वमद्यापि बहुतृष्णा-बह्वाशातरलितोऽसि[2]। यतः—

अङ्गं गलितं पलितं मुण्डं [3]दशनविहीनं जातं तुण्डम्। वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ॥२०१॥

जरायामागतायां केनापि किमपि न स्यात्। उक्तं च—

वार वहंतां याम तु ले तु पर धनढोर। ए तिन्नि विश्वासग करे वेस्या चारण चोर ॥२०२॥

तव मनसि कोऽपि विमर्शो नास्ति। अहं वृद्धो जातः, कस्यापि राज्यं ददामि। जीर्णस्तम्भभारं नव्यस्तम्भेषु संस्थापयामि। राजा पृष्टम्—कदा मम मरणमस्ति[4]? देवः प्रोचे—इतः सप्तमे दिने मरणमस्ति—[5]तदाकर्ण्य राजा भीतः यतः—

[6]पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि। मरणसमं नत्थि भयं खुहासमा वेयणा नत्थि ॥२०३॥

ततो नृपेण देवः पृष्टः—राज्यार्हपुरुषं कथय, यथा तं पदे स्थापयामि। देवः प्राह—प्रियङ्करस्य पुण्याधिकस्य राज्यं देहि, सभायां कस्यापरस्य राज्यानर्हत्वात्। राजा प्राह—इतरस्य [7]राज्यदानं न युक्तम् यतः—

१ त्वद्राज्या। २ क -स्ति। ३ दशना दन्ता। ४ क वर्तते। ५ क इत्या। ६ पन्यसमा नास्ति जरा दारिद्र्यसम पराभवो नास्ति। मरणसम नास्ति भय क्षुत्समा वेदना नास्ति।

कुराजराज्येन कुतः प्रजासुखं, कुपुत्रपुत्रेण कुतोऽस्ति निर्वृतिः ।
कुदारदारेण कुतो गृहे रतिः, कुशिष्यमध्यापयतः कुतो यशः ? ॥ २०४॥ देव आह—

[1]निजदेशस्य सुस्वास्थ्यं चेद्वाञ्छसि नराधिप ! । स्थापय त्वं तदा राज्ये पुण्योत्कृष्टं प्रियङ्करम् ॥ २०५ ॥

एनं निरपराधं कुमारं मुञ्च । हारोऽनेन गृहीतो नास्ति । अस्य[2] हारचौर्ये कथं शक्तिः स्यात् ? । हे राजन् ! तव कोशान्मया गृहीत्वा[3] इयन्ति दिनानि रहः स्थापितः । राज्ययोग्यं पुरुषं ज्ञापयितुं मया त्वदग्रेऽस्य शीर्षात् हारः प्रकटीकृतः । ततो राज्ञा कुमारो मोचितः । राजा [4]वक्ति– मत्पुत्रस्य त्वं राज्यं देहि । देवः प्राह–तव पुत्रस्यायुः स्तोकमस्ति । अपरं प्रजाप्रियो नास्ति, राजेन्द्र ! यदि न मन्यसे, तर्हि कुमारिकाचतुष्टयमाकार्य तिलकं कारणीयम् । सभामध्ये यस्य कस्यापि प्रथमं तिलकं ताः स्वयमेव कुर्वन्ति, स एव राजा भवतु । सर्वैरपि मानितम् । कुमारिका आकारिताः, वर्द्धापनं[5] हस्ते समर्पितम् । [6]ताभिः प्रियङ्करस्यैव राज्यतिलकं कृतम् । देवेन चतसृणां कुमारीणां मुखेऽवतीर्य श्लोकचतुष्कं[7] कथितम् । एका[8] प्राह—

जिनभक्तः सदाचारो[9] नरेन्द्र ! त्वं प्रियङ्कर ! । सुरेषु प्रथमस्तेन रक्षणीया प्रजा सुखम् ॥२०६॥

---

१ क देशसौख्य प्रजासौख्य । २ क–अस्य कोशे तालके दत्ते गमनशक्ति कथ स्यात् ? । ३ क. गृहीत, एकान्ते । ४ क कथयति ।
५ क. वर्धापनक । ६ क–तत्पार्श्वात् सभास्थाना तिलक कारितम् । ७ क –चतुष्य । ८ क. एकयोक्तम्– । ९ क. सदा भूयात् ।

द्वितीया [1]आह—यत्र प्रियङ्करो राजा तत्र सौख्यं[2] निरन्तरम् । तस्मिन् देशे च वास्तव्यं सुभिक्षं निश्चितं भवेत् ॥२०७॥
तृतीया आह—अशोकनगरे राज्यं करिष्यति प्रियङ्करः । द्वासप्ततिश्च वर्षाणि स्वीयपुण्यानुभावतः ॥२०८॥
तुर्या आह—प्रियङ्करस्य राज्येऽस्मिन् न भविष्यति कस्यचित् । रोग–दुर्भिक्ष–मारी–ति–चौर–वैरिभयानि च ॥२०९॥

ततो देवाः पुष्पवृष्टिं चक्रुः । अशोकचन्द्रराज्ञापि स्वहस्तेन तिलकं कृतम्, प्रधान–राजलोकैश्च प्रियङ्करस्य राज्याभिषेकः कृतः । प्रियङ्करस्याज्ञा सर्वत्राभूत् । पट्टे उपवेशितः । छत्रं धृतम्, [3]अग्रे देवाङ्गना ननृतुः, प्रधानपुरुषा जहृषुः, स्वजनास्तुतुषुः, पित्रादयस्तु पुपुषुः, प्रियङ्कर-नृपस्य देवतादत्तं राज्यं श्रुत्वा वैरिभूपा अपि प्राभृतकं वितेनुः, प्रजास्तस्य पुण्यप्रशंसां चक्रुः, देवा देव्यश्च स्वस्थानं जग्मुः । [4]ततः सप्तमे दिने अशोकचन्द्रस्य मरणं जातम् । [5]प्रियङ्करराज्ञा स्वपितृसमानस्य राज्ञो मृतकार्याणि कारितानि । [6]ततोऽशोकचन्द्रराज्ञः पुत्रस्य ग्रामग्रासादि विभज्य किञ्चिदर्पितम् । [7]अधिकारिणो नव्याः स्थापिताः । ततो देशाः साधिताः । श्रीप्रियङ्करनृपस्योपसर्गहर-स्तवगुणनादेवेहलोके[8] सर्वाभीष्टकार्यसिद्धयोऽभूवन्, भाण्डागारे धनकोट्यो जाताः । यतः—

उपसर्गहरस्तोत्र–गुणनात् कार्यसिद्धयः । भवन्ति [9]भक्तिनां पुंसां मित्रीयन्ते च शत्रवः ॥२१०॥

---

१ क प्राह । २ क सुख । ३ क तदग्रे । ४ क ततो नृपस्य मरण तद्दिने एव जातम् । ५ क प्रियकरेण । ६ क तत्पुत्राणा । ७ क सर्वेषा ग्राम–ग्रासादिचिन्तनकार्याय नव्या अधिकारिण । ८ क इहलोके एव । ९ क. भाविना ।

तथा च—सुकृतं धनस्य बीजं व्यवसायः [1]सलिलमथ प्रतिनीति। फलमुपचयं[2] नराणां परिपाकमुपैति कालेन ।२११।

[3]प्रियङ्करराजा अनेकदानादिपुण्यानि[4] करोति, कारयति। लोका अपि दानादिधर्मपरा[5] जाताः यतः—

राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः। राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः ॥२१२॥

तदनु धनदत्तपुत्री श्रीमतीनाम्नी [6]दाक्षिण्य-क्षमा-विनय-विवेकालङ्कृता पट्टराज्ञी कृता। कियता कालेनास्याः[7] पुत्रो जातः। वर्द्धापन कारितम्, दान दत्तम्। यतः—

सुभोजनं दिनं[8] सारं सुभार्या सारयौवनम्। सुपुत्रेण कुलं सारं तत्सारं यच्च दीयते ॥२१३॥

क्रमेण वर्द्धयमानस्य पुत्रस्य सोत्सवं जयङ्कर इति नाम दत्तम्। पञ्चमे मासे तस्य दन्तः प्रादुरभूत्। शास्त्रज्ञाः राज्ञा पृष्टाः। तैरुक्तम्—

प्रथमे मासि सञ्जातो दन्तो हन्ति कुल ततः। द्वितीये जातदन्तस्तु स्व [9]तनु विनिहन्ति सः ॥२१३॥
[10]तार्त्तीयिके पुनर्मासे पितर वा पितामहम्। तुर्ये मासे च जातेषु तेषु भ्रातॄन् विनाशयेत् ॥२१४॥
हस्त्य-श्व-करभान् पुत्रान् पञ्चमे पुनरानयेत्। मासे करोति षष्ठे तु सन्तापं कलहं कुले ॥२१५॥

---

१ क सलिलमेघवृष्ट्य। २ क फलमुपनीय ३ क. राजा प्रियकर। ४ क अनेकपुण्यानि। ५ क दानादिपरा। ६ क दाक्ष्य-दाक्षिण्य। ७ क तस्य। ८ क दिने। ९ क स्वजात। १० क. तृतीयके।

नाशयेत् सप्तमे मासे धन-धान्य-गवादिकम्। यस्य दन्तयुतं जन्म तस्य राज्यं विनिर्दिशेत् ॥२१६॥

तदाकर्ण्य हृष्टो राजा राजकार्याणि करोति। अस्मिन्नवसरे राज्ञो द्वितीयहृदयमिव सर्वराज्यकार्यधुरन्धरो [1]हितङ्करमन्त्रीश्वरः शूलरोगेण विपन्नः। मन्त्रिणं विना राज्यं न शोभते। यतः[2]—

[3]मुंहता विणु राज ज[4] किस्युं रख(प)वाल विणु पोलि[5]। पति पाखें(पें) नारी किसी [6]पहिरणु विण [7]किसी मोलि[8]॥

रावणस्य गतं राज्यं प्रधानपुरुषं विना। श्रीरामेण निजं राज्यं प्राप्तं लक्ष्मणबुद्धितः ॥२१८॥

ततः श्रीप्रियङ्करेण[9] मन्त्रिपुत्रमाकार्य ततो [10]बुद्धिपरीक्षार्थं काव्यमेकं पृष्टम्। यथा—

मुखं विनाऽत्ति[11] न करोति शुद्धिं हस्तौ न भक्ष्यं बहुभाजनस्थम्।
रात्रिंदिवादि न कदापि तृप्तः, शास्त्रानभिज्ञः परमार्गदर्शी ॥२१९॥

मन्त्रिपुत्रेणोक्तम्—प्रदीपः। पुना राज्ञा पृष्टम्—

---

१ क मन्त्रीश्वर। २ क अधिकमिदम्-यत-"सूल-विस-अहि-विसूइया-पाणिय-सत्थ-ऽग्गि-सभमेहिं च। देहतरसकमण करेइ जीवो मुहुत्तेण—शूल-विष-अहि-विसूचिका-पानीय-शस्त्र-अग्नि-सम्भ्रमैश्च। देहान्तरसङ्क्रमण करोति जीवो मुहूर्तेन"॥ ३ क महुना। मुहता-महेता। ४ क. राजह। ५ क पोल। ६ क. पहिरण-पहेरण। ७ क कसी। ८ मोलि-मोलियु। ९ क. प्रियङ्करराजा। १० क तद्बुद्धि-। ११ क. ऽन्तेन।

नारि [1]तिन्नि छे[2] एकठी मिली[3] वे गोरी त्रीजी सामली। पुरुषह् विणु नवि आवें[4] काजि रातिदीस मानीजे[5] राज[6] ॥

तेनैवोत्तरं दत्तम्–दोति, लेखिनी, मषी। सभास्थेन विदुषोक्तम्—

योगी किं ध्यायति ध्याने, गुरवे क्रियते किमु। प्रतिपन्नं सतां कीदृग् [7]आदौ छात्राः पठन्ति किम्? ॥२२१॥

स आह–ॐ नमः सिद्धम्। मन्त्रिपुत्रेण विद्वान् पृष्टः–मदुक्तं कथय। यथा—

एकपुरुष कोडिह [8]परवर्यो हींडे[9] पालो न[10] कहिं[11] चल्यो[12] नारी नाम [13]पुरिसो जे लहें रूडो[14] विरूओ लोकतसु कहें[15]

[16]चन्द्रमाः। [17]ततस्तद्बुद्धिरञ्जितेन राज्ञा मन्त्रिपुत्रो मन्त्रिपदे स्थापितः। यतः—

बुद्ध्या जानन्ति शास्त्रं विमलगुणतती राजमानं च नित्यं बुद्ध्या सर्वार्थसिद्धिर्भवति रिपुबल जीयते तत्क्षणेन।
बुद्ध्या गृह्णाति दुर्गं लघुरपि नृपती रक्ष्यमाणं सुयोधैर्बुद्ध्या चाणाक्य–रोहा–ऽभयकुमरवराः प्रापिता द्राग् महत्त्वम् ॥

तस्मिन्नवसरे श्री[18]धर्मनिधिसूरयस्तत्र प्राप्ताः, तेषां वन्दनार्थं श्रीप्रियङ्करो राजा सपरिवार [19]आगतः। श्रीगुरुभिरुपदेशो दत्तः। यथा—

---

१ क. तणि। २ क. वे। ३ क. मिलइ। ४ क आवि। ५ क. मानीज। ६ क राजि। ७ क मातृकादो पठन्ति कम्। ८ क परवरिओ। ९ क. हींडि। १० क–नास्ति। ११ क. कहिंड। १२ क चडीओ। १३ क. ते सोहग लइ। १४ क रुडु विरूउ। १५ क कहइ। १६ क. चन्द्र। १७ क नैतत। १८ क. धर्मसूरय। १९ क. –रो गतः।

[१] जिनप्रणामो जिननाथपूजा नमस्कृतेः संस्मरणं च दानम्। सूरीश्वराणां नति-पर्युपास्ती रशास्त्ररसानां दिनकृत्यमेतत्[२]॥
श्री तीर्थयात्राकरणं महेन साधर्मिकाणामदनस्य दानम्। श्रीसङ्घपूजाऽऽगम-लेखनं च तद्वाचनं स्यादिति वर्षकृत्यम्॥

तीर्थयात्राफलं यथा—

सदा शुभध्यानमसारलक्ष्म्याः[३] फलं चतुर्द्धा सुकृतासिरुच्चैः। तीर्थोन्नतिस्तीर्थकृतां पदाप्ति र्गुणा हि यात्राप्रभवाः स्युरेते॥
वपुः पवित्रीकुरु तीर्थयात्रया चित्तं पवित्रीकुरु धर्मवाञ्छया। वित्तं पवित्रीकुरु पात्रदानतः कुलं पवित्रीकुरु सच्चरित्रैः॥

विशेषतः[४] श्रीशत्रुञ्जयमहातीर्थयात्रायाः[५] फलं वर्त्तते। यतः—

[६]नमस्कारसमो मन्त्रः शत्रुञ्जयसमो गिरिः। धर्मो जीवदयातुल्यः शास्त्रं कल्पश्रुतान्नहि ॥२२७॥
[७]शत्रुञ्जयो येन दृष्टो दुर्गतिद्वितयं क्षिपेत्। सागराणां सहस्रं तु पूजास्नात्रविधानतः ॥२२८॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात्। दुष्कर्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥२२९॥

[८]श्रीप्रियङ्करनृपो गुरूपदेशं श्रुत्वा [९]विशेषधर्माभिग्रहान् जग्राह। पुनरुपसर्गहर[१०]स्तवगुणनाम्नायं पप्रच्छ। श्री-

१ अत्र श्लोके-पादादि-अक्षरेण कथाकर्तुर्नाम—'जिनसूर' इति प्रकट्यते। २ क. अस्मिन् काव्ये कर्तुर्नाम। ३ क. -क्ष्मी। ४ क विशेषात्। ५ क यात्राफल। ६ क-अन्त्योऽय श्लोकः। ७ क. शत्रुञ्जये जिने दृष्टे। ८ क राजा प्रियङ्कर.। ९ क विशेषतो धर्माभिग्रहपरो जात.। १० क. स्तोत्र।

गुरवः प्रोचुः—अस्मिन् स्तवे [1]श्रीभद्रबाहुगुरुभिर्मन्त्र—यन्त्राश्चानेके गोपिताः सन्ति। यत्स्मरणादद्यापि—[2]सलिलानल-विषविषधर—दुष्टग्रहराजरोगरणभयतः। राक्षसरिपुगणमारिचौरेतिश्वापदादिभ्यः—रक्षा स्यात्। राजेन्द्र! यत्तव सुख-संयोग—सन्तान—सम्पत्—समीहितार्थसिद्धिः, साम्राज्यप्राप्तिः, तथा दुःख—दारिद्र्य—दास—दौर्भाग्य—पाप—पाटच्चर-विपन्निवृत्तिश्चाभूत्। [3]तत्सर्वोऽप्युपसर्गहरस्तवगुणन—ध्यानमहिमा ज्ञेयः। प्राक् स्तवे षष्ठी गाथाऽभूत्। तत्स्मर-णेन तत्क्षणात् धरणेन्द्रः प्रत्यक्ष एवागत्य तत्कष्टं निवारितवान्। ततस्तेन धरणेन्द्रेण श्रीपूज्याग्रे प्रोक्तम्—पुनः पुनरत्रागमनेनाहं स्थाने स्थातुं न शक्नोमि—इति तेन षष्ठी [4]गाथाकोशे स्थाप्या। पञ्चभिर्गाथाभिरपि अत्रस्थस्तत्स्तवं ध्यायतां सतां सान्निध्यं करिष्यामि। तदनु पञ्चगाथाप्रमाणं स्तवनं पठ्यते। आद्यगाथयोपसर्गो—पद्रव—विष-विषधरविनिवृत्तिः स्यात्। प्रथम—द्वितीयगाथाभ्यां गुणिताभ्यां[5] ग्रह—रोग—मरकी—विषमज्वर—दुष्टदुर्जन—स्थावर—जङ्गमविषोपशमः स्यात्। आद्य—द्वितीय—तृतीयगाथाभिर्गुणिताभिर्नर—तिरश्चां विषमरोग—दुःख—दौर्गत्य—हीनकुलादि न स्यात्, सुख—सुगति—सौभाग्यलक्ष्मी—महत्त्वादि च स्यात्। चतसृभिर्गाथाभिः सर्ववाञ्छितप्राप्तिः स्यात्। एतासु श्रीपार्श्वचिन्तामणिमन्त्रो न्यस्तोऽस्ति श्रीभद्रबाहुपादैः। सम्यग्गाथापञ्चकप्रमाणगुणनं इहलोक—परलोककार्यकरम्।

१ क मन्त्रा। २ श्लोकोऽय लघुशान्तिस्तवे मानदेवीये। ३ क स। ४ क. पञ्चगाथाप्रमाण स्तवन कथ्यते। ५ क नास्त्येतत्।

अत्रानेके मन्त्राः—स्तम्भन-मोहन-वशीकरण-विद्वेषणो-च्चाटनरूपा गुप्ताः सन्ति । ते [१]मन्त्रा यन्त्राश्च [२]तद्वृत्तितो ज्ञेयाः। ततो नृपः श्रीगुरून् वन्दित्वा स्वस्थाने प्राप्तः । राजा आसन्ने पार्श्वनाथप्रासादे रात्रौ सर्वदोपसर्गहरस्तवनगुणन-ध्यानं करोति प्रहरं यावत्। एकदा श्रीप्रियङ्करराजा [३]प्रासादे श्रीपार्श्वनाथाग्रे भोगं गृहीत्वा निशायां तद्ध्यान-लयं[४] प्राप्तः । सेवकाश्च प्रासादाद्बहिः स्थिताः[५] ।सभायां राजलोकः समागतः । राजा अद्यापि सदसि [६]न समागत इति प्रधानैरङ्गरक्षकाः पृष्टाः। तैरुक्तम्—राजा देवगृहादागतो नास्ति । प्रधानास्तत्र गताः । मध्ये[७] कपाटं दत्तमस्ति । कपाट-विवरेण तैर्विलोकितम्। श्रीपार्श्वनाथः सुरभिपुष्पैः पूजितोऽस्ति । अग्रे प्रदीपो वर्त्तते । परं राजाऽग्रे उपविष्टो न दृश्यते। हृदि ज्ञातं तैः प्रधानैः—राज्ञो निद्रा आगता सम्भाव्यते, साऽपि देवगृहे ८४ आशातनाभयान्न घटते । राजा तथाऽपि प्रधानैर्मधुरवचनैरालापितः—आस्थानसभाऽलंक्रियताम्, सूर्योऽपि श्रीप्रभुमुखकमलविलोकनायोच्चैश्चटितो-ऽस्ति, सभालोकः प्रातः प्रणामार्थमूर्ध्वदमोऽस्ति[८] । तथापि मध्ये कोऽपि न ब्रूते । मन्त्रिणो[९] दध्युः—किं केनापि देवेन वा, विद्याधरेण वाऽपहृतः । ततः कपाटोद्घाटनोपाया अनेके कृताः निष्पुण्यकमनोरथवत् निष्फला जाताः, कुठाराः कुण्ठा अभूवन् देवतादत्तं कपाटं केनोद्घाटयितुं शक्यते ? ततो [१०]बलिभोगादि मन्त्रिभिः कृतम् । तदा[११]

१ क मन्त्र-यन्त्राश्च । २ क लघुवृत्तितो । ३ क प्रभुप्रासादे । ४ क. -नाय । ५ क प्रात समयो जात । ६ क नायाति । ७ क मध्यकपाट । ८ ऊर्ध्वदम - ऊर्ध्वोच्छ्वास । ९ क. मन्त्री दध्यौ । १० क भोगादि । ११ क. ततो ।

देवोऽधिष्ठायकोऽवक्-पुण्यवन्नृपदृष्ट्या द्वारमुद्घटिष्यति । राजा सुखेन वर्त्तते, चिन्ता नाऽऽनेया । प्रधानैः प्रोक्तम्-अस्मत्स्वामी क्वास्ति ? केनापहृतः ? कदा समागमिष्यति ? । ततो देवः प्राह—

ऋद्धिं दर्शयितुं स्वीयां लात्वा तं धरणो गतः । समेष्यति नृपो नूनमितश्च दशमे दिने ॥ २३० ॥

आगत्य सुरसान्निध्यात् पुरो दीपं [1]विधास्यति । प्रत्यहं पार्श्वनाथस्य पूजाकृच्च[2] भविष्यति ॥२३१॥ युग्मम् ।

ततो मन्त्रिणस्तद्राजपरिवारश्च सर्वेऽपि हृष्टाः-स्वगृहे गताः । प्रातः[3] प्रासादस्थप्रतिमापूजा-प्रदीपादि लोकाः [4]पश्यन्ति । [5]दशमदिने मन्त्रिणो राजपरिवाराः सन्मुखं गताः । तावता वने दिव्यतुरङ्गमे चटितो राजा समायातः । सर्वेऽपि प्रणामं चक्रुः । राज्ञो महाश्चर्यं जातम् । मदागमनं कथं ज्ञातम् ? । ततो[6] मन्त्रिणोऽवादिषुः-देववाक्यात् । [7]वाजित्राणि वाद्यमानेषु, तोरणेषु बद्धेषु, पताकासूत्थम्भितासु, गन्धर्वेषु गायत्सु राजा सोत्सवं देवगृहे प्राप्तः । तावत्कपाटानि तद्दृष्ट्या तत्कालमुद्घटितानि-यथा सहकारमञ्जर्यां कोकिलाकण्ठम्, यथा वा विद्यया कुण्ठः नरः सकर्णः स्यात् । ततो यथाविधि प्रासादे प्रदक्षिणां दत्त्वा, नैषेधिकीं कृत्वा मध्ये प्राप्तः । फलानि ढौकयित्वा देवस्तुतिमकरोत् । यथा—

१ क विधाय स । २ क पूजा कृत्वैव भोक्ष्यते । ३ क प्रात. प्रात । ४ क. कुर्वन्ति । ५ क. नास्त्येतत् । ६ क नास्त्येतत् । ७ क. वाद्येषु-अत्रापि 'वाजित्राणि' स्थाने 'वाजित्रेषु' योग्यम् ।

श्रीपार्श्वो धरणेन्द्र[1]सेवितपदः पार्श्वं स्तुवे भावतः, पार्श्वेण प्रतिबोधितश्च कमठः पार्श्वाय कुर्वे नतिम् ।
पार्श्वाच्चिन्तितकार्यसिद्धिरखिला पार्श्वस्य तेजो महत्, श्रीपार्श्वे प्रकटः प्रभावगहनः[2] श्रीपार्श्व! सौख्यं कुरु ॥२३२॥
वरकनकशङ्खविद्रुम–नानाभरणैर्विभूषितो जीयाः । त्वां स्तौमि पार्श्वजिनं मरकतघनसन्निभं विगतमोहं ॥२३३॥
सप्ततिशतं जिनानां [3]त्वां प्रसिद्धीकृतं प्रभावेण । श्रीपार्श्वजिन! कलावपि सर्वामरपूजितं वन्दे ॥२३४॥

नमस्कारानुक्त्वा, शक्रस्तवादि भणित्वा विज्ञप्तिकां राजा पेठे । यथा—

जय पासजिणेसर[4]जगह सार पइं निम्मिय तिहुअण–परूवयार । मण वंछिय पूरण कप्पसाल[5]तुह सोहग[6] सुह महिमा विसाल [7]भवभव हुं भमिओ वहु ठाम सेवक मे थप्पि अम्ह रक्खि माम । तसु चिंतिअ सिज्झे[8] सयल काम जे जंपे[9] सिरिपासनाम रण वण जल जलणह भय महंत रोग ग्गह हरि करि हुइं पसंत । दुह दलिद दोहग्ग दूरि झत्ति[10] जे समरे[11] तुमने इकचित्ते रवि तावडि[12] जिम तम दूरि जाइ तास सामी समवडि कुण करोइ । सुह संति निपावइ झाइ जे अ पभेटइं बेटइ न हुइ छे (ते)अ इय सिरि जिणसूरह[13] आणंदपूरे हियसनाह संथुणिय मणे । पउमावइदेवी तुह पयसेवी सुरनर (विद्याधर) वितर धरणे इं

---

१ क –वन्दित–। २ क इहत.। ३ क. त्वया। ४ क जिनेश्वर। ५ कल्पवृक्ष। ६ क तुह महिमा महिमाहि विशाल। ७ क भावि भावि हु भमिउ वहु अ ठामि सेवकनि थप्पिय राखिय माम। ८ क. सिज्झइ। ९ क जपि सापि। १० क. जाति। ११ क. समरइ। १२ क तापेन। १३ कथाप्रणेतनाम 'जिनसूर' इति। क. जणेसरसूरिहि।

तुह सवि कहे सरिखुं नयणे निरखुं टाले आवागमण दुह। तुह महिमा मोटी पयतल लोटी मग्गउ सिद्धि अणंतसुह ।२४०।

इति श्रीपार्श्वनाथविज्ञप्तिकां कृत्वा स्वावासे सभामलञ्चकार। प्रधानैः राजा पृष्टः—पातालोकस्वरूपं श्रीधरणेन्द्रसमृद्धिस्वरूपं च। राजा आह—अहं प्रासादे ध्याने स्थितः श्रीपार्श्वस्तवं गुणयन्नस्मि। तदा सर्पो महाकायः कज्जलच्छायः[1] प्रकटीभूतः[2]। तं दृष्ट्वा ध्यानं न मुक्तवान्। ततः स सर्पः श्रीपार्श्वनाथसिंहासने[3] चटितः। मया देवस्याशातनाभयात् दुष्टजीवत्वाद्धस्तेन सर्पपुच्छो[4] धृतः, तदा सर्परूपं त्यक्त्वा देवो जातः। मया पृष्टः—कस्त्वम्? स आह–धरणेन्द्रः अहं श्रीपार्श्वनाथसेवकः तव ध्यानाकृष्टोऽत्रागतः, मया परीक्षितश्च त्वं ध्यानान्न चलितः, तेन तव साहसं महदस्ति। अहो! उत्तम! मत्स्थाने समागच्छ, यथा तव पुण्यफलं दर्शयामि। ततोऽहं धरणेन्द्रेण सार्धं पातालभुवने[5] गतः, तत्र रत्नस्वर्णबद्धा भूमिका सर्वत्र दृष्टा, अग्रे धर्मनरेन्द्रावासो वैक्रियो दर्शितः, ततः श्रीधर्मनृपः साक्षाद् दृष्टः, तत्पट्टराज्ञी जीवदया दृष्टा, तयोः प्रणामो मया कृतः। तावाहतुः अस्मत्सदने[6] चिरं राज्यं कुरु। ततोऽग्रे सप्तापवरिका[7] दृष्टाः। मया पृष्टम्–एतासु किमस्ति? धरणेन्द्र आह–सप्तस्वपवरिकासु सप्त सुखानि सन्ति। मयोक्तम्–कानि तानि?

---

१ क प्राय। २ क प्रादुर्भूत। ३ क. पद्मासने। ४ क. सर्प पुच्छे। ५ क भवने। ६ क, –प्रसादेन। ७ क सप्त सुखापवरिका–अपवरिका–भारागाम–ओरडी।

आरोग्यं प्रथमं द्वितीयकमिदं लक्ष्मीस्तृतीयं यशः, तुर्यं स्त्री पतिचित्तगा च विनयी पुत्रस्तथा पञ्चमम्।
षष्ठं भूपतिसौम्यदृष्टिरतुला वासोऽभयः[1] सप्तमं, सप्तैतानि सुखानि यस्य भवने धर्मप्रभावः स्फुटम् ॥२४१॥

ततः सप्तापवरिका दृष्टाः। प्रथमायां देवः सर्वरोगहरः, चामरयुग्मं चास्ति। द्वितीयायां सुवर्ण-रत्न-माणिक्यादीनि सन्ति। तृतीयायां महेभ्योऽर्थिभ्यो दानं ददानोऽस्ति। चतुर्थ्यां स्त्री पतिभक्तिं कुर्वाणाऽस्ति। पञ्चम्यां विनीतपुत्र-पौत्र-वध्वादिकुटुम्बं सुमेलम्। षष्ठ्यां राजा न्यायी प्रजाहितकरो[2] दृष्टः। सप्तम्यां कोऽपि देव उपसर्गहरस्तव[3]गुणनपरो दृष्टः। मया पृष्टम्[4]—कस्मादेतत् गुणनम्? तेनोक्तम्—स्तवध्यानेन देशे, नगरे, गृहे, सर्वभयेभ्यो रक्षा स्यात्; मनोवाञ्छितानि च प्राप्यन्ते। एतत्स्तवाम्नायमन्त्र[5]पुस्तकान्येतानि। यत्र श्री-धर्मोदयः[6] स्यात्, तत्रैतानि सप्तसुखानि स्युरिति वैक्रियलब्धिर्दर्शिता। ततोऽग्रे स्वर्णरत्नमयो वप्रो दृष्टः—तत्र लोहमय्यः सप्त प्रतोल्यः स्युः। प्रथमप्रतोल्या मध्ये गतः, तत्र सामान्यदेवभवनानि परितः कल्पवृक्षवनानि। द्वितीयस्यां गतः, तत्र सुवर्णमयानि[7] क्रीडा कर्तुं शुकपञ्जराणि—शुका नृपं दृष्ट्वा श्लोकं वदन्ति। यथा—

समागच्छ समागच्छ, प्रियङ्करमहीपते!। पुण्याधिकैरिदं स्थानं, प्राप्यते नापरैर्नरैः ॥२४२॥

---

१ क –ऽभये। २ क –कारी। ३ क. –गणन–। ४ क –ष्ट। ५ क प्रभावमन्त्र-। ६ क. दयौ स्त। ७ क सुवर्णमयक्रीडाशुकपञ्जराणि विलोकितानि।

तृतीयायां कुमारं दृष्ट्वा नृत्यं कुर्वन्तो मयूरा नृभाषया आहुः—

सफलं जीवितं जात [1]राजेन्द्र ! तव दर्शनात् । धन्यं तन्नगरं नून यत्र राजा प्रियङ्करः ॥२४३॥

चतुर्थ्यां कस्तूरिकामृगा अग्रे प्रोच्छलन्ति, राजहंसविवेकेन मां प्रणेमुः । पञ्चम्यां स्फाटिकरत्नमय्यः क्रीडावापिकाः, स्नानमण्डपादीनि । षष्ठ्यां इन्द्रसामानिकगृहाणि । सप्तम्यां देवाङ्गनावृन्दानि अधित्यकायां द्योतयन्ते । ततो धरणेन्द्रसभा नानाश्चर्यमयी देवकोटियुता दृष्टा । तत्र दिव्यं नृत्यं दृष्टम् । तत्र धरणेन्द्रेण स्वपुत्रवन्नव दिनानि पुण्यफलदर्शनाय स्थापिता देवा देव्यः प्रतिपत्तिं चक्रुः । अत्र देवेन सह मयैव दश दिनानि कृतानि । ततस्तैर्दिव्याहारो भोजितः, तस्य स्वरूपं वक्तुं न पार्यते । तत्रत्यामृद्धिं दृष्ट्वा मम पुण्ये विशेषरुचिर्जाता । तदा मयोक्तम्—हे धरणेन्द्र ! मां नगरे प्रेषय यथा पुण्यं करोमि । ततः श्री धरणेन्द्रेण स्वहस्तसत्का दिव्या रत्नमयी मुद्रिका सप्रभावा [2]गमनस्थायिनी वहुजनभोजनदायिनी समर्पिता । एतस्याः प्रभावं शृणु—यदि[3] विशेषपुण्यकार्यं स्यात् तदा प्रातरेषा नमस्कारो–पसर्गहरस्तवाद्य–गाथात्रय वारत्रयं स्मृत्वाऽङ्गणाकाशे[4] प्रोच्छालनीया[5] । तत्र तावत्स्यास्यति, यावत्पञ्चजन[6]सार्द्धपञ्चशतीनां भोजनं भविष्यति । राजा हृष्टः, तां मुद्रिकां लात्वा सवहुमानम् । ततस्तेनाद्य स्वदेव-

---

१ क जातमद्य राजेन्द्र । २ क नगरस्थायिनी । ३ क. यदा । ४ क अङ्गणे आकाशे । ५ क. उल्लालनीया । ६ क. पञ्चजनकार्यै राद्ध भोजन ।

युतो दिव्यतुरङ्गमेनात्र प्रेषितः। परं युष्माकं सन्मुखागमनेन कौतुकं जातम्। प्रधानः प्राह—[1]अधिष्ठायकदेववाग्, पातालगमना—ऽऽगमन- कपाटोद्घाटनं यावत्सर्वं मन्त्रिभिः कथितम्। ततः सभाग्रे पुण्यफलानि नृपो वक्ति—देवानां ऋद्धिर्दृष्टा, देवानां यानि सौख्यानि वर्त्तन्ते तानि वक्तुं कः क्षमः स्यात्। उक्तं च—

[2]देवाण देवलोए जं सुक्खं तं नरो सुभणिओ वि। न भणइ वाससएणवि जस्स वि जीहासयं हुज्जा ॥२४४॥

तेन पुण्यमेव करिष्यामि। मन्त्री प्राह- पार्थिवानां सदा पुण्यमस्ति। यतः—

न्यायो धर्मो दर्शनानि तीर्थानि सुखसम्पदः। यस्याधारे प्रवर्त्तन्ते स जीयात् पृथिवीपतिः ॥२४५॥

प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः। [3]अधर्मस्यापि षड्भागो यः प्रजा नैव रक्षयेत् ॥२४६॥

ततो राज्ञा[4] जिनप्रासादादिसप्तक्षेत्र्यां धनं वप्तम्[5]। यतः—

[6]जिणभुवण—जिणबिंब- पुत्थय—संघसरूवाइं सत्त खित्ताइं। जिण्णोद्धारं पोसह—साला तह साधारणं चेव[7] ॥२४७॥

१ क. अधिष्ठायकदेवत्वात्। २ देवाना देवलोके यत् सौख्य तद् नर सुभणितोऽपि। न भणाति वर्षशतेनाऽपि यस्यापि जिह्वाशत भवेत्। ३ क पापस्याऽपि हि षड्भागो जायते यो न रक्षति। ४ क. राजा। ५ क व्ययाति। अत्र 'वप्तम्' स्थाने 'उप्तम्' समुचितम्। ६ जिन-भुवन—जिनविम्ब—पुस्तक—सघस्वरूपाणि सप्त क्षेत्राणि। जीर्णोद्धार पौषधशाला तथा साधारण चैव। ७ क—पुस्तके अत्र स्थाने अन्या गाथा— "जिणभुवणे जिणबिंबे पुत्थयालिहणे चउविहे सघे। जो ववइ निअदव्व सुकयत्था ते अ ससारे—जिनभुवने जिनबिम्बे पुस्तकलेखने चतुर्विधे सघे। यो वपाति निजद्रव्य सुकृतार्थास्ते च संसारे ॥

मासमध्ये पक्षिकाद्वयपारणे श्रीधरणेन्द्रदत्तमुद्रिकाप्रसादात् साधर्मिकवात्सल्यद्वयं करोति। एकदा पारणके राजा श्रीगुरुवन्दनार्थं गतः। उपदेशो दत्तः। तदैकः श्राद्धो जिनधर्मवासितः, सप्तधातुविहितश्राद्धैकादशप्रतिमः, श्रावकैकविंशतिगुणाभिरामेण श्रीआनन्दप्रतिमः, द्वादशव्रतधरः, श्रीगुरुपादयोर्वन्दनकानि ददानोऽस्ति। राज्ञा स नैष्ठिकपुत्रो निमन्त्रितः। तदा श्रीगुरुभिरुक्तम्—अस्याष्टमस्य पारणं वर्त्तते, तेन पूर्वमेव भोजनं देयम्। राज्ञा प्रतिपन्नम्—स आगतो भोजनार्थमुपवेशितः। तावता [1]मनुजपञ्चशती भोजनाय समागता। यावत् स श्राद्धः पारणकं कृत्वोत्थितः, तावद् गगनान्मुद्रिकासमुत्तीर्णा राज्ञो हस्ते स्वयमागता। राजा दध्यौ—किमद्य सञ्जातम्—किं देवः कुपितः? किं वा ममानास्था[2] काऽप्यभूत्। किं वा मत्पुण्यं क्षीणं जातम्? देवस्योक्तं अद्यासत्यं जातम्। कथमधुना महत्त्वं रक्षणीयम्। कथं च पञ्चशतीनामागतानां शीघ्रं गौरवं करणीयम्। तावद्देववाण्यभूद् राज्ञश्चतुष्के[3]—राजश्चिन्ता न कार्या, अत्र न मृषा देवतावचः। तत्र पञ्चशतीपुण्यमेकस्मिन् भोजिते भवेत्। महतां महान्तो वात्सल्यकारिणः स्युः, लघूनां[4] पुण्यवतां कोऽपि नास्ति। यतः—

नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी। गुणी च गुणरागी च विरलः सरलो जनः ॥२४८॥

ततः सूपकारेणोक्तं नृपाग्रे—परमान्नपात्राणि रिक्तानि जातानि। ततो देव आकाशस्थोऽवक्—मा [5]वदत। तत्र

---

१ क. महेभ्याना। २ क. ममाऽप्य–। ३ चतुष्क भाषाया 'चोक'। ४ क गुणवताम्। ५ क मा वद त्वम्, गत्वा विलोकय।

गत्वा विलोकयत। मया भृतानि सन्ति, मनुष्यसहस्राणां भोजने कारितेऽप्यूनानि न भविष्यन्ति। नृपो हृष्टः-- सर्वान् भोजयामास। तानि तथैवाकण्ठं भृतानि दृश्यन्ते। ततः सकलं नगरं निमन्त्र्य भोजितम्। नगरलोकस्य चमत्कारो जातः। कोऽपि पाकं कुर्वाणो न दृश्यते, सर्वेषां दिव्याहारो भोजितः। तत्किं देवः प्रत्यक्षोऽस्ति? किं वा देववरो[1] दत्तोऽस्ति? किं चित्रवल्लिकाऽस्ति? किं वा सुवर्णपुरुषः प्राप्तोऽस्ति?। सभायां[2] राजा आह--एष धर्म-ध्यानमहिमाऽवगन्तव्यः। तदा कवीश्वरेणाशीर्वादद्वयमुक्तम्। यतः--

[3]उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो, विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभोजी।
कोषापेक्षी परस्मादुचितवहुपथः सर्वदा पुण्यलोकी, चित्रं राजाधिराज! त्वमिव तव रिपुस्तत्र कस्मं मतीमः ॥२४९॥
भाले भाग्यकला मुखे शशिकला लक्ष्मीकला नेत्रयोः, हस्ते दानकला भुजे जयकला युद्धे प्रतिज्ञाकला।
भोगे कोककला गुणे बलकला चित्ते प्रतिज्ञाकला, काव्ये कीर्त्तिकला तव प्रतिदिनं क्षोणीपते! राजते ॥२५०॥

ततः राज्ञा आशीर्वाददातुर्दानं दत्तम्--

१ क दैवैर्व-। २ क राजसभामागत्-। ३ क-पुस्तके अत्र स्थाने अन्यत् श्लोकद्वयम्-यथा--श्रीमत्क प्रेयाप्रिरीद श्रीपत्ययशशो मद। श्रीसुतैककलौ नन्द श्रीदस्याररम्यासपदम् (?) ॥ स्वस्तिकवन्ध श्रीनृपनामगर्भं ॥१॥ श्रीमत्सभाविवेकाभ शते कुम्भसत्प्रभ। राजा देभयादम्भगुण-कुम्भरुचानिभ (?) ॥ अष्टदल कमल श्रीगुरुनामगर्भम् ॥२॥ एते द्वे अपि चित्रकाव्ये अशुद्धकल्पे।

ग्रामाः पञ्च हयाः पञ्च सहस्राः पञ्च काञ्चनाः । प्रियङ्करेण तुष्टेन दत्ताः स्वस्तिककारिणे ॥२५१॥

ततः स्वपित्रोः श्रीशत्रुञ्जयमहातीर्थयात्रां [१]कारयामास । यतः—

[२]सेत्तुंजो सम्मत्तं सिद्धंतो सघभत्ती संतोसो । सामाइअं सड्ढा वि य सत्त ससा दुल्लहा लोए ॥२५२॥

तीर्थे साधर्मिकवात्सल्य-सङ्घपूजा-दीनोद्धार-सत्राकारादि कृतम् । यतः—

विवाहे तीर्थयात्रायां चन्द्रे[३] मित्रे सुरालये । वस्त्रदानमिदं श्रेष्ठं सत्पात्रेषु विशेषतः ॥२५३॥

तत्पिता पासदत्तश्रेष्ठी तलहट्यां स्वर्गं गतः । तन्नाम्नी देवकुलिका [४]कारिता । श्रीशत्रुञ्जयस्थाने[५] महोत्सवं कुर्वन् स्वगृहे प्राप्तः । तदनु स्वर्णमयीं राजादनीं[६] पादुकायुतां कारयित्वा राजा स्वगृहे पूजयामास । ततो वार्द्धके पुण्यावसरं ज्ञात्वा पुत्रस्य राज्यं दित्सुस्तं शिक्षयामास । यथा—

कोपं स्वामिनि मा कृथाः प्रियतमे मानं भयं सङ्गरे, खेदं बन्धुषु दुर्जने सरलतां शाठ्यं विशुद्धाशये[७] ।
धर्मे संशयितां गुरौ परिभवं मिथ्याविवादं जने, गर्वं ज्ञातिषु दुःस्थितेऽवगणनां नीचे रतिं पुत्रक ! ॥२५४॥

---

१ क सविस्तर । २ शत्रुंजय सम्यक्त्व सिद्धान्त सघभक्ति संतोष । सामायिक श्रद्धाऽपि च सप्त ससा दुर्लभा लोके ॥ ३ क चन्द्र-मित्रे । ४ क श्रीशत्रुंजये । ५ क स्थाने स्थाने । ६ भाषायाम् 'रायण' । ७ क. विशुद्धात्मने ।

[1]जीभे साचुं वोलिजे[2] राग रोस करि दूरि। उत्तमसुं[3] संगति करि[4] लाभे[5] जिम सुख भूरि ॥२५५॥
[6]जिणवर देव आराहिअ[7] नमीय[8] सहगुरु भत्ति। सूधो[9] धम्म ज सेविइं रहीइं निर्मल चित्त ॥२५६॥

गाथाद्वये प्रथमाक्षरेषु जीराउला नाम, कर्त्तुश्च। इति स्वपुत्रस्य जयङ्करस्य शिक्षां दत्त्वा सुमुहूर्ते स्वपदे तं स्थापयामास। राजा धर्मकृत्यानि करोति। अष्टमी-[10]पूर्णमास्योः पौषधं गृह्णाति। सुपात्रेषु दानं ददाति। यतः-

[11]अभयं सुपत्तदाणं अणुकंपा उचिअ-कित्तिदाणं च। दुन्नि वि मोक्खो भणिओ तिण्णि वि भोगाइयं दिंति ॥२५७॥

ततः प्रान्तसमये जाते पूर्णायुः प्रतिपाल्याऽऽराधना-ऽनशनादि बहुपुण्यानि विधाय श्रीप्रियङ्करो राजा सौधर्म-देवलोके समृद्धिकदेवोऽभूत्। क्रमेण महाविदेहक्षेत्रे मोक्षं प्राप्स्यति। ततः केचन पुत्राः प्रियङ्करवदतिजाताः पितु-रधिका भवन्ति। श्रीस्थानाङ्गेऽप्युक्तम्-"पुत्ता[12] चउव्विहा पन्नत्ता, तं जहा-सुजाए, अइजाए, अणुजाए, कुलंगारे, एवं सीसा वि।"

१ अस्य दोधकस्य प्रतिपादाद्याक्षरेण 'जीराउला' इति श्रीपार्श्वनाथापरनाम प्रकट्यते। २ क. वोल्जे। ३ क. उत्तमसिउ। ४ क. करो। ५ क लाभइ। ६ अस्य तु तथैव ग्रन्थकारस्य 'जिण(न)सूर' इति नाम व्यज्यते। ७ क. आराहीइ। ८ क. नमिइ। ९ क. सूधु। १० क. चतुर्दश्यो। ११ अभय सुपात्रदानम्- अनुकम्पा—उचित-कीर्तिदान च। द्वे अपि मोक्षो भणित. त्रीणि अपि भोगादिक ददाति ॥ १२ पुत्राश्चतुर्विधा प्रज्ञप्ता, तद्यथा-सुजात, अतिजात, अनुजात, कुलाङ्गार। एव शिष्या अपि-चतुर्थ स्थानके।

सहकारश्च सुजातं कूष्माण्डी[१] वीजपूरमतिजातम् । वटतरुफलं कुजातं भवति कुलाङ्गारमिक्षुफलम्[२] ॥२५८॥
उपसर्गहरं स्तोत्रं ये ध्यायन्ति दिवानिशम् । तेषां प्रियङ्करस्येव सम्पदः स्युः पदे पदे ॥२५९॥
इति[३] श्रीप्रियङ्करमहाराजा श्रीजिनशासनप्रभावको महाश्रावकोऽभूत्—

इत्थं प्रियङ्करनृपस्य कथां निशम्य यत्नो विधेय इह धर्मविधौ सुधीभिः ।
ध्याने शुभे जिन–गुरुप्रणतौ च दाने येनात्र राजसुख–सन्तति–सम्पदः स्युः ॥२६०॥

विशालराजसूरीश–सुधाभूषणसद्गुरोः । शिष्येण जिनसूरेण सुकृताय कथा कृता ॥२६१॥
उपसर्गहरस्तोत्र–कथां कल्याणकारिणीम् । शृण्वन्ति वाचयन्त्यत्र सुखिनस्ते भवन्ति वै ॥२६२॥

## इति श्रीप्रियङ्करनृपकथा श्री[४] उपसर्गहरस्तोत्रप्रभावे समाप्ता.

---

१ भाषायाम्–"कोळु" २ क–पुस्तकेऽधिकमिदं श्लोकद्वयम्—अतिजातोऽधिकस्तातात् सुजात स्वसम पितु । अपजात गुणहीन स्यात् कुलाङ्गार कुलान्तक ॥ नाभी रिसहो पढमो वीओ आइच्च–महजसा दुन्नी । तइओ आइच्चजसो चउत्थो होइ कडरीओ । –नाभे ऋषभ. प्रथमो द्वितीय आदित्य–महाजसौ द्वौ । तृतीय आदित्ययशाश्चतुर्थो भवति कण्डरीक ॥ ३ क–पुस्तके इत. किमपि नास्ति । ४ क. इति श्री उपसर्गहरस्तोत्र–लघुवृत्तिरियं समाप्ता ॥

